क्षसं त्वा देव सोम सुचक्षा अवख्येषं । इत्यवेक्ष्य । मंद्राभिभूतिः केतुर्यज्ञानां वा॰
शीर्ष्णी वाग्जुषाणा सोमस्य तृप्यतु इति प्रतिप्रस्थाता । स्रुप दृय व्याघारं शे
षं भक्षयति । हिन्व मे गात्रा॰ तिगाः इत्यासानमभिमृश्य पात्रं प्रक्षाल्य निधाप
यति । वाग्देवी सोमस्य पिबत्विति वा भक्षमंत्रः सर्वत्र अथाद्विदेवत्यान् भक्षयति ।
होता प्रथमो भक्षयति । ततोऽध्वर्युस्ततः प्रतिप्रस्थाता । द्विरैन्द्रवायवं भक्षयति ।
क्रमेण द्विर्वषट्कारकरणात् द्विः संप्रदानात्तत्र ग्रहसंपातावनयनात् भक्षम
क्षमं त्रमावर्त्य भक्षेणं सकृत्सकृदितरौ मैत्रावरुणाश्विनौ होता प्रथममैन्द्र
वायवं भक्षयित्वानुसृजन्नेवाध्वर्यवे ददाति । अध्वर्युः भक्षे हि मा विश दीर्घा
युत्वाय शं॰ सोमप्रियो मे हृदोऽसि इति भक्षं प्रतीक्षते । अश्विनोस्त्वा बाहुभ्या

१२८

ऽस्यध्यासं। इतिप्रतिगृह्य। नृचक्षसंत्वादे० अवख्येषं। इत्यवेक्ष्य। होतरुपह्वयस्व।
प्रतिप्रस्थातरुपह्वयस्व। मंद्राभिभूतिः केतुर्य० तुमंद्रास्व० त्वेहिविश्वंच० या
युष्पवन्वसे। वसुमद्गणस्य सो० विर्दः प्रातः० तोभक्षयामीति प्राणे पूपा निग्रा
ह्वाग्देवी सोमस्य पिबत्विति वा भक्षयति। अनुसृजनेव प्रतिप्रस्थात्रे प्रय
छति। हिन्वमेगात्राहरि० मिमातिगाः। इत्यासाने प्रत्यभिमृशति। प्रतिप्रस्था
ता भक्षेहीत्यादिना भक्षंप्रतीक्ष्य अश्विनोरिति प्रतिगृह्य नृचक्षसंत्वेत्यवेक्ष्य
मंद्राभिभूतिरित्यनुदृत्य वसुमद्गणस्येति वाग्देवी सोमस्य पिबत्विति वा प्राणे
पूपा निग्राह भक्षयति हिन्व म इत्या[illegible]साने प्रत्यभिमृशति होतृचमसे किं
चिदवनीयानुसृजं तदेवमेव भक्षयंति होतृचमसे सर्वशेषमानीय पात्र

।।१२८

मुत्सृजंति। एवं मैत्रावरुणस्य भक्षयंति सकृदेव होता प्रथमो भक्षयति अध्वर्युर्वे
प्रयच्छति अध्वर्युः भक्षेहीत्यादिना प्रतीक्ष्याश्विनोरिति प्रतिगृह्य चक्षसं वे
त्यवेक्ष्य मंद्राभिभूतिरित्यनुद्रुत्य चक्षुषो रूपं निग्राह्यो होतृ रूप कृयस्तस्यादिव
सु मद्रणस्येति वाग्देवीति वा भक्षयति हिन्व मइत्यामिमृश्योति भक्षयित्वानुत्सृज
न्त्यर्पयति प्रतिप्रस्थातापि भक्षे हीत्यादि हिन्व मइत्या सामिमृश्योनातं करो
ति। होतृचमसे सकृदवनीय पात्रमुत्सृजति। एवमेवाश्विनं दक्षिणकर्णेऽ
पनिगृह्य सर्वतः प्रदक्षिणमास्यानं परिहृत्य वामे कर्ण उपनिगृह्य यथेतं
पुनः परिगृह्य भक्षयंति सकृत्सपातं होतृचमसे वनयति। पुरोडाशशक
लमैंद्रवायवस्य पात्रे वदधाति। पयस्यां मैत्रावरुणस्य पात्रे धाना आश्वि

॥१२६॥

न्स्यपात्रे। तानि पात्राणि हविर्धानस्यापरस्यां द्वारा प्रप्रा द्योत्तरस्यां वर्त्तन्यां सा
दयति। आनतीय सवनां सारिस्थेरत्ने। उत्तरेण हविर्धानं गत्वेडा पात्रमुपस्त्री
र्येत्यादि करोति यजमान भागमवदाय पृथगौ पधमाभिस्या शंचनिदधा
ति। लाजानां चतुर्धाकरणं। इडामवदायांगुलिपर्वणी अनक्ति होत्र इडामा
दधा सुपो घच्छं तं चमसां श्चमसाध्वर्यवः उपहूयमानां होतृचमसमास्थ
र्थं धारयति उपहूतायां ततः प्राशित्रभक्षणानंतरं इडा शकलमच्छावाका
यनिदधाति। पूर्ववदिडां भक्षयंति। ये प्रकृतावितिवचनात्प्रकृते सवनी
यपुरोडाशकर्मणि समवेतास्त इत्यर्थः ततो मैत्रावरुणः प्रतिप्रस्थाता
च भक्षायित्वा मार्जयेते स्वभागैः सह यजमानः सप्तमाः ततो हविः शेष



॥१२६॥

भक्षयंति। होत्रका अग्रे भक्षयिष्यंति। तूष्णीं शाखां प्रहरति अथवा जिनेन प्रच
रंतिव्याख्यातं पश्चु होतरिवा जिनपात्र उपस्तीर्य भामेरित्यभिमृश्य बर्हिषि विवि
षिंचन्वा जिनं सर्वं जुहोति। पूरयित्वा नाभिघारयति वा जिभ्यो नु ब्रूहि आश्रा·
अस्तु·वाजिनो यज ऊर्ध्वं जुरासीनो होता वषट्करोति वषट्कृते विच्छिन्द्यमान
याजुहोति। यजमा·वाजिभ्य इदं वाजिनाम हृदे·यं द्रियावाजे मानमितिवा।
अध्वर्युरनुवषट्कृते जुहोति। यज·अग्नये स्विष्टकृत इदं। अग्नेः स्विष्टक
तोऽहं देवायुष्मान् अग्निर्मा दु॰ अध्वर्युः वाजिनोद्रेकेण दिशः प्रतियजति
दिशः स्वाहेति पुरस्तात् प्रदिशः स्वाहेति दक्षिणतः आदिशः स्वाहेति प
श्चात् विदिशः स्वाहेत्युत्तरतः उद्दिशः स्वाहेति मध्ये·स्वाहा दिग्भ्य इति

॥१२९॥

प्रदक्षिणमनुषिंचन्जुहोति। नमो दिग्भ्य इत्युपतिष्ठते। यजमा॰ दिग्भ्यः इद॰
प्रदिग्भ्यं॰ आदिग्भ्यं॰ विदिग्भ्य॰ उद्दिग्भ्यं॰ दिग्भ्य॰ समुपहूय वाजिनं भ
क्षयंति। यजमानः प्रथम उत्तमो वा भक्षयति। वाजिनो भक्षो भवतु वाजो
अस्मात्रेतः सिक्तममृतं बलाय सनइंद्र इंद्रियं द्रविणं दधातु मा रिषा
म वाजिनं भक्षयंत स्तस्य ते वाजिन्वा जिभिर्भक्षं कृतस्य मधुमत उप॰
क्षयामीति वाजिन भक्षण मंत्रः ततः प्रतिप्रस्थाता पिष्टलेप फलीक
रण होमौ जुहोति यजमानः प्रणीता सु माजेयते प्रतिप्रस्थाता पवेषो
दसनं कपाल विमोचनं करोति। नतश्च मम भक्षः सर्वेषां प्रथमो होता
भक्षयति सकृत द्विः स्वेच मम मे प्रथमं स्वच मत्सं अनुलय भक्षयति। इत ॥१२॥

रेषांचमसिनांचमसिनूपहूयभक्षयति होत्रकाणांचमसेषुतंतंचमसिनमध्वर्युश्चो
पहूयभक्षयति। ततो होत्रको होत्रध्वर्युं उपहूय भक्षयंति। अध्वर्युश्च तस्य तस्य भक्ष
णानंतरं होतरि तस्मिंश्चोपहूय भक्षयतीति तौ होता स्वं चमसमादायानुपहूय समा
ख्या भक्षं भक्षयतीति ततो मध्यतःकारिणः होतर्युपहूय समाख्या भक्षं भक्षयंति होत्र
का होतर्यध्वर्यौ चोपहूय समाख्या भक्षं भक्षयंति शेषं कुर्वतः तत्र श्लोकाः व
षण्निमित्तं सर्वेषां चमसानां सकृत् हुतः होता दो भक्षयेत्पश्चाद्धोत्रकाश्च य
थाय थां भक्षयेयुर्वषट्कारादध्वर्युश्च प्रदानतः अतश्चमसिनः स्वं स्वं भक्ष
येयुः समाख्यायां तत्र होतुरुपाह्वानं चमसे स्वे न विद्यते अभावाद्द्वाल्लिणेन
होता होत्राश्चाध्वर्युणा सह उपहूयंते होत्रकाश्चमसेषु यथाक्रम शिष्टयू

॥१२८

पह्वे होतुर्भवेत्त्वमसिभिः सह। भक्षेत्। इत्यादि हृदयाभिमर्शनान्ते कृते वशेषितं
सोमान्सर्वान्भक्षितांश्चमसान् आप्यायस्व समेतु ते० संगथे इति चमसिनं
आप्याययंति। वसतीवरीभिः मंत्रे जपमात्रमित्येके लौकिकसोमरसेनेत्यन्ये
तेनाराशंसा भवंति ता न्नाराशंसानुदगायतान्दक्षिणस्य हविर्धानस्य प
श्चाद्दक्षसादयति। अनंतरं नेष्टु राग्नीध्रस्य चमसोसादयेति उपविशत्य
च्छावाकेस्त्रोण स्वं धिष्ण्यं बहिः सदे संतस्थे पुरोडाश शकलमादधद ध्वर्यु
राह। अच्छावाक वदस्व यत्ते वाद्यमिति। ततो च्छावाकेनो पोस्मान्ब्राह्मणान्ब्रा
ह्मणाहूय ध्वमिक्षिपुच्यमाने। अध्वर्युः अच्छावाकोवाय सुपहवमिच्छतीति तं हो
तरुपह्वयस्वेति संप्रेष्यति यत्रैनं होत्रा पहूयमानं जानाति तस्मिन्काले अध्व ॥१२९

वाक्चमसमादायोन्नीयमानायानुहोति संप्रेष्यति चमसमुन्नेत्रे प्रयच्छ
ति। उन्नीयमानसूक्ते परिहिते चमसं पुनरादाय आश्रा॰ अस्तु॰ अच्छावाक यज
जेति संप्रेष्यति वषट्कृते जुहोत्यनुवषट्कृते हुत्वा भक्षं हरति। यज॰ इंद्राग्नि
भ्यां मि॰ अग्नयेस्विष्टकृत इ॰ न भक्षयति नास्मिन्नुपहवमिच्छते यद्यस्मिन्नुप
हवमिच्छेत। भक्षयेत्येव ब्रूयात। भक्षिताप्यायितमच्छावाकचमसं नेष्टुराग्नी
ध्रस्य चमसांवंतस्सादयति। एतदेवातऊर्ध्वमच्छावाकचमसस्य स्थानं
अत एव ज्ञायते। सर्वत्राभियमानुपूर्विकाश्चमसा इति तेषां सादनोन्नयन
होमभक्षणाप्यायनेषु क्रमभेदे सति विपर्यासप्रायश्चित्तं कर्त्तव्यं सप्तमः
पटलः॥ सतु ग्रहैः प्रचरति द्वादशभिस्त्रयोदशभिश्चतुर्दशभिर्वा सह

॥१२९

प्रथमो गृह्यते सहोत्तमा विधिश्रुति साधारण्येन प्रथमोत्तमानां सहग्रहणं
श्रूयमाणं मनसि द्रोणकलशात्कल्प्य होमस्यापि सहभावेक्षा प्त व्यवस्था
माह। द्वादशसु सर्वोत्तानाजुहुतः त्रयोदशस्वन्यतरेण सह चतुर्दशसु
सह प्रथमो सहोत्तमो स्यतत्र सादन अनासन्नाहूयते अन्यस्य होम आ
सादनमंत्रस्याश्रवणात्तु पूर्वस्य पूर्वस्य शेषः उत्तरेसु त्तरमभिगृह्णीतः
स्वस्य पात्रे अध्वर्यु द्रोणकलशात्परिप्लवया पत्नीयं उपयामगृहीतोसि म
धवे त्वेति स्वे पात्रे पूतभृत उदंचनेनोन्नीय द्रोणकलशादभि धारयति ततः
प्रतिप्रस्थाता उपयाम० सिमाधवाय त्वेति स्वे पात्रे तथैव परिप्लवयोदंचन
योरेकत्वान [illegible] र्थो देवमेव ग्रहणं। यदव्य ॥१२९

वधानेन मध्यमानां विशेषणं व्यतिषंकं णमुलन्तं त्रं व्यतिषज्य व्यतिषज्य पर्यायेण
त्यर्थः अध्वर्योः प्रचारसमये प्रतिप्रस्थाता गृह्णातीति तास्पर्योर्थः तदिदमु
क्तं व्यतिषंगं गृह्णीतः प्रतिप्रस्थाता तत्रैव तिष्ठति अध्वर्युरत्याक्रम्याश्राव्य प्र
त्याश्राव्य सतुना प्रेष्येति प्रेष्य वषट्कृते जुहोति। यजमान· इंद्राय मधवते· अ
ध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ् हविर्धानमेति प्रतिप्रस्थाता पनिष्क्रामति प्रविष्टं
तमध्वर्युं ग्रहेण परिगृह्णाति। दक्षिणेन पात्रं हरत्युत्तरेणोपनिष्क्रामति। आश्रा·
अस्तु· सतुना प्रेष्य· वषट्कृते हुत्वा तथैव प्रत्येति मरुद्भ्यो माधवाय इदं तथैवाध्व
र्युः परिप्लवयोपस्तीर्यापयाम गृहीतोसि शुक्राय त्वेति पूतभृतमुदंचनेनोन्नी
य पूर्वस्य ग्रहस्योपरि गृह्णातो पनिष्क्रामति तं निष्क्रामंतं प्रतिप्रस्थातारमध्व

युः पात्रेण परिगृह्णाति दक्षिणेन पात्रं हरत्युत्तरेण प्रविशति। एवं सर्वत्र ग्रह

१४०

संचरहोमः अध्वर्युराश्राव्य प्रत्याश्राव्ये सत्तुनाप्रेष्येति संप्रेष्य वषट्कृते

हुत्वा तथैव प्रत्येति। लब्ध्वा शुक्रायेदं प्रतिप्रस्थाता उपयामगृ॰ सि शुचये त्वे

ति चतुर्थं गृह्णाति। तथैवोपनिष्क्रम्याश्राव्य प्रत्याश्राव्य सत्तुना प्रेष्येति सं

प्रेष्य वषट्कृते हुत्वा तथैव प्रत्येति। अग्नये शुचय इदं॰ अध्वर्युः परिप्लव

यापस्त्वा य उपयाम॰ सि नभसे त्वेति पंचमं गृह्णाति। पूतभृत उदंचनेनो

न्नीय गृहीत्वा द्रोणकलशादभिघार्य द्वारि प्रतिप्रस्थात्रा संगच्छतः उप

निष्क्रम्याश्राव्य प्रत्याश्राव्य ऋतुना प्रेष्येति संप्रेष्य वषट्कृते हुत्वा तथै

व प्रत्येति इंद्राय नभस इदं॰ प्रतिप्र॰ उपया॰ सि नभस्याय त्वेति षष्ठं गृह्णा ॥१४०

त्वाद्यायेध्वर्युणा संगछमान उपनिष्क्रम्याश्राव्य प्रत्याश्राव्य सतुना प्रेष्ये
ति संप्रेष्य वषट्कृते जुहोति तथैव प्रत्येति मित्रावरुणाभ्यां नमस्थाये दं॰
एवमुभौ प्रथमेन सतुपात्र मुखेन प्रत्येकं त्रिस्त्रिर्हुत्वा सतुपात्रमुखे विपर्य
स्यान्याभ्यां मुखाभ्यां द्विर्जुहुतः अध्वर्युः परिप्लवेयोपस्तीर्य उपया॰ सीषा
यत्वा। पूतभृत उदंचनेनोन्नीय गृहीत्वा द्रोणकलशमभिदधारयति प्रति प्र॰ सं
गतः उपनिष्क्रम्याश्राव्य प्रत्याश्राव्य सतुभिः प्रेष्येति संप्रेष्ये वषट्कृते
सप्तमं जुहोति। द्रविणोद इज्यायेदं॰ प्रति॰ उप॰ स्पूर्जो यत्वेत्यष्टमं गृह्णाति। त
थैव संगतः उपनिष्क्रम्याश्राव्य प्रत्याश्राव्य सतुभिः प्रेष्येति संप्रेष्य वषट्
कृते हुत्वा तथैव प्रत्येति। द्रविणोदउर्जायेदं अध्वर्युरुपस्तीर्य उप॰ सिसह

।१४१

स्रेलेति पूतभृतउदंचनेनोन्नीयगृहीत्वा द्रोणकलशादभिघार्य तथैवोपनिष्क्र
म्याश्राव्य प्रत्याश्राव्य सं तु भिः प्रेष्येति संप्रेष्य वषट्कृते हुत्वा तथैव प्रत्ये
ति। द्रविणोदः सहस्य इदं प्रति प्र॰ उपया॰ सि सहस्याय त्वेति दशमं गृही
त्वा तथैवोपनिष्क्रम्याश्राव्य प्रत्याश्राव्य संतु भिः प्रेष्येति संप्रेष्य वषट्कृ
ते हुत्वा यथेतं प्रत्येत्य। द्रविणोदः सहस्य पदं एवं चतुर्णां द्वितीयमुखाभ्यां
होमः ततः पात्रयोर्मुखे विपर्यस्य अध्वर्युर्हविर्धान एवातिष्ठति आगत प्रति
प्रस्थाता उपस्तीर्य उपया॰ सित पस्ये त्वेति पूर्ववदेकादशं गृहीत्वाभिघा
रयति प्रतिप्र॰ उपया॰ सित पस्याय त्वेति द्वादशं गृह्णाति। अध्वर्युरुप

निष्क्रम्याश्राव्य प्रत्याश्राव्य संतु नाप्रेष्येति संप्रेष्य अध्वर्यु यजतामित्यु ।।१४१

त्युक्ते होतरेतद्यजेति संप्रेष्यति। वषट्कृते जुहोति तत्रैव तिष्ठति। अग्निर्भ्यांतप
स इदं प्रतिप्रस्थाता पानि क्रम्याश्राव्य प्रत्याश्राव्य सद्दुनाप्रेष्य गृहपते यजे
त्युक्ते यजमान आह होतरेतद्यजेति। द्वादश्यो तपस्यं प्रति प्र० जुहोति। अग्न
ये गृहपतये तपस्यायेदं० अध्वर्योः पात्रे प्रतिप्रस्थाता संपातमवनयति त
स्येकदेशमध्वर्युः प्रतिप्रस्थातुः पात्रे सूदवत्पात्रं सादयति प्रतिप्रस्थाताह
रति भक्षं। एनं भक्षयति द्विर्होता सकृत्सकृदितरौ यस्य यस्य वषट्कारे
जुहुतस्तं तं प्रतिभक्षयतः होत्राध्वर्युर्भक्षयति पोत्रा प्रतिप्रस्थाएतेन क्रमे
ण वषट्कर्त्रा प्रदाता च वषट्कर्तर्युप ह्वस्तस्य च प्रदातरित्र श्लोकः
होतुः पोतुर्नेष्टुरग्नीधो ब्रह्मणः प्रशास्तुश्च होतुः पोतुर्नेष्टुरच्छावाकस्या

।।१४८

होतुर्द्विः हुते न मुखे नोभौ भक्षयतः तत्र नभेआदीनामकारांतत्वात् मिछंतिक
स्य दर्शनात् तच्चातुर्मास्ययावाद्धाहर्तं तत्वं। स तु ग्रहस्त्रयोदशालेम्ब थाग्रही
तमेकादशमध्वर्युर्जुहोति द्वादशत्रयोदशौ सह गृहीत्वा जुहुतः प्रतिप्र·
ताश्राव्य प्रत्याश्राव्य स तु नाप्रेष्य। एकस्मिन्नेव वषट्कृते जुहुतः त्रयोदशो
संसर्पोस्यंहस्पत्याय त्वेति मंत्र उपयामपूर्वकः अग्नये गृहपतये तप
स्याय संसर्पायांहस्पत्याय इदं· चतुर्दशाले प्रथमद्वितीयौ गृहीत्वा यु
गपन्निष्क्राम्याध्वर्युराश्राव्य स तु नेति प्रेष्यति। सह जुहुतः तत्र तत्तो
यं प्रतिप्रस्थाता। चतुर्थमध्वर्युः स प्रहुत्वा प्रेष्यं मुखं विपर्यस्यति ए
कादशाहुत्वा मुखविपर्यासात् द्वादशं प्रति· तौ यजति। त्रयोदशाचतुर्दशो

प्रत्या

।।१४७

सहगृहीत्वाध्वर्युः अभ्यातिसहजुहुतः स२ सर्पोस्म २ हस्पत्या यलेतु भयो।
ग्रहणमंत्र। अग्निभ्यां गृहपतिभ्यां सं सर्पोभ्यां २ हस्पत्याभ्यामिदं० पूर्ववद्द्वाद १
शमासनामभिरेकादश याज्यादेवताभिः सहनोचितानि देवतास्तानव्याः प्रथ
मद्वेनामनी। यागक्रमेण सर्वत्र भक्षणं। मार्जालीयपात्रप्रक्षाल्न्या यतेने सा
दयति। अध्वर्युः स्वेनर्तुपात्रेणाक्षि॰ तेनैंद्राग्नं शस्त्रं वंतकलशात्। इंद्राग्नी आ
गतं सुतं० धियेषिता। उपयाम० तोसि। इंद्राग्निभ्यां त्वेति गृहीत्वा यथायोनि तमैं
द्राग्नं। एषते योनिरिंद्राग्निभ्यां त्वेति सादयति। अग्रेण होतारं प्राङ्मुख उप
विश्य। इडादेवहूर्मनुर्यज्ञनीर्बृह० हुरो। मा ये पितरोनुमदंतु। इति मंत्रजप ए
वात्र शस्त्रे [illegible] शस्त्रमुपाकरोति। य

११४२

त्रैव होता भ्याह्वयते तस्मिन्काले ध्वर्युरुत्तिष्ठन्दक्षिणं पर्यावर्त्तमान एवं शो

ं सामोद इवेति प्रत्याह्वयते। शों सामो दइवेति ओ३ थामोदइवेति वा एवं प्र

थमं प्रतिगरं प्रतिगृणाति। तिष्ठन्प्रह्वोवा होतुरभिमुख आसमाप्ति प्रतिग

णाति तत्र विरामेषु ओ थामो दइवेति सर्वत्र। प्रणवे प्रणवे तु ओ थामो दइ

वोमिति अत्र चतुः प्रवो देवाया ग्नय इत्यत्र नास्ति प्रतिगरः विग्रहश्चासा

या गान्न स विरामः यदा होता प्रवो देवाया ग्नये बर्हिष्ठमर्चा स्मा इत्यत्र वि

ग्रहं करोति। तत्रापि नास्ति प्रतिगरः ओ थामो दइवे ओ थामो दइवोमिति

त्रिः सगावानपक्षे ओ थामो दइवो शों सामो दइव ततो ओ थामो दइव ओ

थामो दइवों त्रिः उक्थ शा ३ [illegible] सर्वत्र अपाति। ।।१४२

यजमान॰ शस्त्रस्य शस्त्रमस्य जेंमस्य॰ गम्यादिं॰ तयोरर्थीणं। इति शस्त्र
मनुमंत्रयते। सद्य ध्र्वो हुच्येत अभिप्रतिगरणी याह। अध्वर्युः अग्नये पथिकृते
स्वाहा। त्वन्नो अग्नेवरु॰ स्म स्वाहा। सत्वंनो अग्ने वमो म॰ एधिस्वाहा। त्वमग्नेअ
यास्य॰ यज स्वाहा। प्रजापतेनत्वदे॰ यी णा स्वाहा। भुवःस्वाहा। सुवस्वा॰ भूत्वा॰
भूर्भुवसुवः स्वाहा। यजमानं नृत्यथादेवतं शस्त्रं प्रतिगीर्य ग्रहमादायापर
याद्वारा प्रतिनिष्क्रम्य चमसाध्वर्यवश्चमसानादाय तयैवद्वारोपनिष्क्रम्यो
त्तरवेदिदेशं गच्छति। अध्वर्युः आश्राव्य प्रत्याश्राव्य उक्थशाय स्सोम
स्येतिसंप्रेष्यति। वषट्कृते हुत्वानुवषट्कृते जुहोति। वषट्कारानुवष
ट्कारावनुचमसाध्वर्यवो नाराशंसानंतः परिध्यनग्नौ प्रकंपयंति। नारा

॥१४८

सौशंनामनुप्रकंपनं होमभक्तिमा त्रं अग्निर्म्या मिदं अग्नये स्विष्टकृत इदं ।
ऊर्मेभ्यः पितृभ्य इति ख्यातो ग्रहनाराशंसेषु भक्ष आप्यायन सादने चना
राशंसानां अत्र होता ध्वर्युमुपहूय प्रतिग्रहाद्धि भक्षयति । अध्वर्यूरपि होता
रमुपहूय भक्षयति । ततः सर्वे चमसिनः साध्वाकाः स्वं स्वं चमसमनुपहू
यैव भक्षयति । भक्षे ही त्यादि हृदयाभिमर्शनांतो भक्ष उक्तः तत्र ग्रहचमस
योर्नाराशंसयोः सनाराशंसानां तु मंद्राभिभूतिरित्यादिनाराशंसपीत
स्य मधुमत इत्यादिना राशंसमंत्रेणैव भक्षयति शेषं कुर्वतः आप्यायस्वे
ति चमसेभिराप्यायिताः पुनर्नाराशंसा भवंति । नान्दक्षिणस्य सादयति ।
ततः शुक्रपात्रेण कलशात्स्तुतशस्त्रवतवैश्वदेवं ओमास श्चर्षणी धृतो ॰



॥१४८

षः सुतं।उपयाम० सिविश्वेभ्यस्त्वा देवेभ्यः इति गृह्णाति। एषते योनिर्विश्वेभ्यस्त्वा
देवेभ्य इति सादयति। ग्रहग्रहणानंतरं प्रातिप्रस्थातः सवनीयान्निर्वपेति संप्रेष्य
ति। बौधायनीये दृष्टमस्मदीयाः सोकुर्यां अंग ह्रेति ततस्तोत्रमुपाकरोति उपा
वर्त्तध्वमिति बहिष्पवमानस्तोत्रोपाकरणमिति आज्यसंज्ञकानि स्तोत्राणि प्रातः
सवने यजमानः ज्योतिषे हिंकुरुत स्यै प्रस्तुहि तस्यै मेवरुध्यै भूर्भुवः सुवः
पृथिवी होता० बृहस्पतिरुपवक्ता अग्निर्होता० मित्र उपवक्ता। इति जपति।
ब्रह्मा देवसवितरेतत्ते प्राह तत्प्र० देवस्य सवितुः प्रसवे। ज्योतिरसि धर्मायत्वा
धर्मं जिन्व। ओं स्तुतेति प्रस्तौति। यजमा० स्तुतस्य स्तुतमस्यूर्जं म० गम्यादि
द्धि० तयो रपीणा। इति स्तुतमनुमंत्रयते। अध्वर्युः इडा देव हूर्म० नुमदंतु।

इतिजपति। अध्व॰ शो॰ सोमो दइव ओ या मोदइव शो॰ सोमो दइवों ३ उक्थश्।
इति शस्त्रं प्रतिगीर्य जपति। यजमा॰ श क्रस्य शस्त्रम॰ रयीणां शस्त्रमनु
४८ मंत्रयते। अध्व॰ अग्नये पथिकृते॰ त्वं नो अग्ने॰ स त्वं नो अग्ने॰ त्वमग्नेऽ
यास्य॰ प्रजापतेन॰ भूः॰ भुवः॰ स्वः॰ भूर्भुवः स्वः॰ शस्त्रं प्रतिगीर्य ग्रह
मादत्ते चमसांश्च मस्याध्वर्युः॰ आश्रा॰ अस्तु॰ उक्थ शाय जसोमस्य
विश्वेभ्यो देवेभ्यः॰ अग्नये स्विष्टकृते॰ उमेभ्यः पितृभ्य इदं व्याख्या
तमनुप्रकंपनं ग्रहनाराशंसानां भक्षादि हृदयाभिमर्शनांतः सर्वं भक्षा
श्च मसानामाप्यायनसादने भवतः भक्षाश्च यथास्थानमासादनं त्रिभि
रुक्थ्य विग्रहैः प्रचरतः क्रमेण उपयाः॰ तो। अमित्रावरुणाभ्यां त्वेति

उक्थ्य स्थाल्या उक्थ्य पात्रेण तौ तेखं भाग मैत्रावरुणं गृह्णाति। एषवते योनि
र्मित्रा वरुणाभ्यां त्वेत्यायतने सादयति पुनर्हविरसीति स्थाली प्रत्यभिमृश
ति। मैत्रावरुण चमस मुख्यानेकादश चमसानुन्नयति पुरस्तादाग्नी
ध्रचमसादच्छावाक चमस मुन्नयति स्तुतशस्त्रे भवतः उपावर्त्तध्वमि
ति बर्हिर्भ्यामुपाकरोति। यजमान० ज्योतिषा हि कुरुलस्ये प्रस्तुहित
स्येमवरुध्ये। व्याहृतीः चतुर्होतारं पंचहोतारं च जपति। ब्रह्मादेव
सवित० प्रसवे। अन्वितिरसि दिवं त्वा दिवं जिन्व। ओं स्तुत। यज० स्तु
तस्य स्तुतम० रयीणां। इति स्तुतमनुमंत्रयते अध्व० इडा देवहू० मंदंतु।
शों सामोदइव। ओं थामोदइव। ओं शों सामोदइव। ओं थामो

॥१४६

इइवोंउक्थाशाः इतिजपति। यजमा॰ शास्त्रस्यशास्त्र॰ रयीणां। शस्त्र
मनुमंत्रयते। अध्व॰ अग्नयेपथिकृतइत्यादि शस्त्रे प्रतिगीर्यग्रह
मादत्ते चमसांश्चमसाध्वर्यवः। उ॰ आश्रा॰ अस्तु॰ उक्थशा यजसो
मानां। वषट्कारानुवषट्कारयो ग्रहंजुहोति। मित्रावरुणाभ्यामि
दं। अग्नयेस्विष्टकृतइ॰ ग्रहंचमसांश्च हुत्वा भक्षेषु क्रियमाणेषु बाह्यतः स
दआरभ्य देवेभ्यस्त्वा देवायुवं पृणज्मि तस्या युषे जुष्टं मैत्रावरुण चम
सेग्रहसंपातमवनयति। तत्रैव प्रशास्तास्वंचमसमध्वर्युमुपहूय द्विर्भ
क्षयित्वा होत्रादिचमसि षुतत्चमसानुपहूयभक्षयतिपुनरपि अध्वर्युमुपहूय
येमैत्रावरुणचमसंग्रहं भक्षयतिततः सर्वेचमसिनः प्रशास्तयुपहूयग्रहं ॥१४८

हंमक्षयति
अध्वर्युश्चन
स्थिनपनय

चमसांश्च भक्षयंतिसर्वे भक्षानाप्यायनसादनेभवतः प्रतिप्रस्थाता। उप
२४ या॰ तोसीद्रायत्वेतिरुंग्रहीत्वाएषतेयोनिरिंद्रायत्वेतिसादयंतिपुन
र्हविरसीतिस्थालीमभिमंत्र्य ब्राह्मणाच्छंसिचमसमुख्याश्चमसान्
नयन्नेकस्मैचमस ग्रहणायराजानमतिरेचयंति स्तुतशस्त्रे भवतः
उपावर्तध्वं। यजमा॰ ज्योतिष्टहिंकुरुतस्येप्रस्तुहितस्येमेवरुध्वे।
भूर्भुवः स्वः चतुर्होतारंपंचहोतारंवजपति। ब्रह्मा॰ देवसवितः प्रसव
संधिरस्यंतरिक्षायत्वांतरिक्षं जिन्व ओ३ स्तुत॰ यज॰ स्तुतस्यस्तुत॰
स्तुतमनुमंत्रयते। प्रतिप्रस्थाताइडादेवहू॰ दंतु शो३ सामोदइवओ
थामोदइवओ३ शो३ सामोदइव ओथामोदइवांउक्थशाः यज॰

१४९

शखस्य शस्त्र० यीणं। शस्त्रं प्रतिगीर्य्ये अग्नये पथिकृतइत्याद्ग्रिहमादत्ते
चमसांश्चमसाध्वर्यवः आश्रा० अस्तु० उक्थ्याशा यज सोमानां। वषट्कृतानु
वषट्कृते यो हुत्वा देवेभ्यस्त्वा देवा युं० ये जुष्टं। ब्राह्मणाच्छंसि चमसे ग्रह
संपातमवनयति। इंद्राग्न्येदं अग्नये स्विष्टकृत इदं० न प्रतिप्रस्थाता भक्षय
ति सर्वं भक्षानाप्यायन सादने भवतः। तृतीये उक्थ्य ग्रहेण प्रतिप्रस्थाताप्र
चरति। उपयाम० सींद्राग्निभ्यां त्वेति गृह्णाति न स्थाली मभिमृशति। अच्छा
वाक चमसमुख्यांश्चमसानुन्नयन्सर्वं राजानमुन्नयमातिरीरिच्योद
शाभिः कलशौ मष्टुन्युंभेति संप्रेष्यति उपहोमार्थमेव शिष्टं राजानं
पात्रांतरे निदधाति। उपावर्त्तध्वं। यज० ज्योतिषेहिं कुरुत स्येप्रस्तुहित ॥१४९

स्येमेवरुध्ये व्याहृतीश्च तुहोतारंपं चहोतारंच जपति। ब्रह्मा॰ देवसवितर॰
सवे। प्रतिधिरासि पृथिव्ये ला पृथिवीजिन्वओं स्तुत। यजम॰ स्तुतस्य॰ प्रति
प्रस्थाता। उ॒ञ देव॰ शो ऽंसामोदइव। ओथामो दइव ओ॰ शो॰ सामो दइव
ओथामोदइवोंउक्थ शा॰ यज॰ शस्त्रस्य शास्त्र॰ यीणां। अनुमंत्रयते। प्रति
प्र॰ अग्नये पथिकृते॰ त्वं नोअग्ने सत्वं नोअग्ने त्वमग्ने ऽभू॰ प्रजापतेन॰ भूर्भुव
स्सुवः शास्त्रप्रतिगीर्येग्रहमादत्तेचमसं श्चमसा ध्वर्यवः आश्रा॰ अस्तु॰
उक्थशा यज सोमोनाव षट्कृतानुवषट्कृतपूर्वहुत्वा इंद्राग्निभ्यामि॰ अ
ग्नये स्विष्टकृत इदं॰ प्रतिप्र॰ देवेभ्यस्त्वा दे॰ जुष्टं अछावाक चमसे ग्रहसंपा
तमवनयति नप्रतिप्रस्थाता भक्षयति सर्वं भक्षाना प्यायनसादने भवतः

७।१४८

अत्राग्रयणो नैवहूतनोप्यानियुक्ताः द्वितीये सवने होमस्तेषामात्र ध्रुवोपि न । हूय
ते तु तृतीयस्मिन्नेहावाग्रयणध्रुवौ अग्निं नरइत्याद्यैस्त्रिभिरनुवाकैः त्रयस्त्रिं
शत अनाज्ञातप्रायश्चित्ताहुतीर्जुहोति । आग्नीध्रादये प्रजापतिर्मनसांधो
च्छत इत्यादि त्रयस्त्रिंशतमाहुतीर्जुहोति तास्त्वग्रेवक्ष्यते । अध्वर्योराहव
नीये होममंत्रास्तु अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयंत प्रश
स्तं । दूरेदृशं गृहपतिमथर्युं २ स्वाहा । अग्नय इदं · अग्निनाग्निः सामिध्य०
कास्य स्वाहा । अग्नय इदं २ सप्रते अग्ने स० घृतेन स्वाहा । अग्नये · मनो
ज्योतिर्जुषतां० आघृतेन स्वाहा · मनसे ज्योतिष इदं ४ त्रयस्त्रिं २ तंतवोय
वितत्निरे० वा २ अप्येतु स्वाहा । धर्माय इदं · यन्मम मनसश्छिद्रं यद्वाचो यच्चमेहृ ।।१४८

दः अयंदेवो बृहस्पतिः संतं सिंचतु राधसा स्वाहा। बृहस्पतय· विश्वकर्मो हवि
रिदं जुषाणः संता नेयं ज्ञं समिमं तनोतु। या व्युष्टा उषसो याश्च या ज्या स्ताः सं
दधामि हविषा घृतेन स्वाहा। विश्वकर्मणे इ· अया श्चाग्नेस्य· भेषजं स्वाहा· अ
यसेग्नय· त्वमग्ने अयास्यया· षजं स्वाहा। अग्नयेया· त्वंनो अग्नेव· अग्नीव
रुणा· सत्वंनो अग्नेवमो· अग्नीव· भंद्रं कर्णेभिः शृणुया· हितं यदायुः स्वा
हा। देवेभ्य इदं· स्वस्तिनइन्द्रोवृ· दधातु स्वाहा। इन्द्राय पूष्णेतार्क्ष्याय बृहस्पत
य· पृषदश्वा मरुतः पृश्निमातरः शुभंयावा नो विदथेषु जग्मयः अग्निजि
ह्वा मनवः सूरचक्षसो विश्वेनो देवा अवसागमन्निह स्वाहा। विश्वेभ्यो देवेभ्य·
शतमिन्नु शरदो अं· यर्गतोः स्वाहा। देवेभ्य इदं· मे हो अग्ने दी दिहि· ति

३

वाजास्वाहा। अग्नय· श्रुत्कर्णाय कवये मेध्याय वचोभिर्नो कमुभया मिशं सन्त्वतो भयमभयं तत्कृधी अग्नेदेवानामव हेयुक्ष्व स्वाहा· अग्नय· अग्निंवोदेवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वं योमर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतानः पावक स्वाहा। अग्नय· घृतप्रतीको घृतयोनिरग्निर्घृं· पक्षिदेवान्स्वाहा। अग्नय·१२ आयुर्दा अग्ने हविषो· क्षतादिम स्वाहा आयुर्दे अग्नय· इमो अग्ने वीततमानिहू· ति विधं तु स्वाहा अग्नय। सप्त ते अग्ने· अग्नय· मनो ज्योति· मनसे ज्योति· त्रयस्त्रिंशत्तंतवो येवि· घर्मा सेदं· यन्मे मनस छिद्रं· बृहस्पतय· विश्वकर्मा हविरिदं जुषाणः सं तानेय· विश्वकर्मणे इ· युनज्मि त्वा ब्रह्मणा· वयंतस्वाहा जातवेदस इदं· अग्नि

१४८ ॥१४८

युनज्मिशवसा घृ० नाकउत्तमे स्वाहा। अग्नये इंधानास्वाश्शत ५ हिमा द्यु·अधिना
के स्वाहा·अग्नये २७ अग्निर्नईडितईडितव्यैर्देवैः पार्थिवैःपातु स्वाहा अग्नये २·वा
यर्नईडितईडितव्यैर्देवैरांतरिक्षेः पातु स्वाहा·वायवे २० सूर्योनईडितईडित
व्यैर्देवैर्दिव्यैः पातु स्वाहा·सूर्यायेदं·विष्णुर्नईडितईडितव्यैर्देवैर्दिव्यैः पातु
स्वाहा विष्णवे·अग्निर्यजुर्भिः पूषास्वगाकारेण तदुमंयज्ञमवतु ते मामवन्त
नुव आरभेनुमारभध्वं ५ स्वाहा अग्नये पूष्णइदं· ३३ सोमे त्रयस्त्रिंशतमाज्या
हुतीर्जुहोति त्रयस्त्रिंशतं चयस्ततनूरागतीधीये प्रजापतिमनसा धायेत
स्वाहा प्रजापतये सोमायेदं·एवमुत्ते रत्रापि·धातादीक्षाया ५ स्वाहा २ पूर्णा
सोमं कं ४ ०० ५ स्वाहा ४ सवितार ५ स्वाहा ५ वरुणउभनद्धः स्वाहा ५ अ

सुरः क्रीयमाणः स्वाहा ६ मित्रः क्रीतः स्वाहा ७ शिपिविष्ट आँदितः स्वाहा ८ न सा
रंधिषः प्रोह्यमाणस्वाहा ९ अधिपतिरागत स्वाहा १० प्रजापतिः प्रणीयमा
नः स्वाहा ११ अग्निराग्नीध्रे स्वाहा १२ बृहस्पतिराग्नीध्रात्प्रणीयमानः स्वाहा १३
इंद्रो हविर्धाने स्वाहा १४ अदितिरासादितः स्वाहा १५ विष्णुरुपावह्रियमाणस्वा
हा १६ अथर्वोपात्तस्वा १७ यमोभिषुतस्वा १८ अपूतपाआधूयमानस्वा १९ वायुः
पूयमानः स्वा २० मित्रः क्षीरश्रीस्वा २१ मंथी सक्तुश्रीस्वा २२ वैश्वदेव उन्नीतः
स्वा २३ रुद्र आहुतः स्वा २४ वायुरावृत्तः स्वाहा २५ नृचक्षाः प्रतिख्यातस्वा २६ भ
क्ष आगतस्वा २७ पितृणां नाराशंसः २८ असुरात्तस्वा २९ सिंधुरवभृथमेव
प्रयन्स्वा ३० समुद्रोवगतः ३१ सलिलः प्रप्लुतस्वा ३२ सुवरुद्‍वगतस्वा ३३ ॥१६०

पृथिवी स्वाहा विभूवरिस्वाहा सिनीवालिस्वाहा उपरंधे स्वाहा आचित्ते स्वाहा
नमस्ते स्वाहा भुवो विंस्ते स्वाहा · भूः स्वाहा · भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः
स्वाहा सोमस्याज्यमसि हविषो हविर्ज्योतिषां ज्योतिर्विश्वेषां देवानां भा
गधेयीः स्थास्त्वं वः सिंचंतु मरुतः समिंद्रः सं बृहस्पतिः सं वो यमग्निः सिंचत्वा
युषा च बलेन च सर्वमायुर्दधातु मे मां दावा शाः शुध्यू राजिराः ज्योतिष्मं
तीस्त्र० इहमावत आपो भद्रा घृतमिदाप० वचे सागन् आदित्या इत्यास्युतवा·
पयदावः आपो हिष्ठा · यो वः शिव० तस्मा अरंग · इति सप्तभिः सिंचत्यभि
मंत्रयते वा अभूद्देवः सविता वंद्यो० द्रविणं यथादधत् इत्यभिमंत्र्य हिरण्य
गर्भ इति जुहोति देवां जनमगन्य सोऽस्तु तो मायरा स्याम्सी रागछतु सोमस्क

धनको मोस्कान् । धसा ओंजाय क्षितं कुरु

१६९

नमभिमंत्र्य। अग्निः प्रातःसवने पात्वस्मान्वै० हभक्षाः स्याम स्वाहा। प्रशास्तः
प्रसुवेति संप्रेष्यति सर्पतेत्या हमहा स्तो। अत्र पत्नीयजमानौ व्रतं दैक्ष
व्रतं संतिष्ठते प्रातःसवनं यस्य स्वा लेति. अभिषवादि माध्यंदिनं स
वनं तथा यते तस्य प्रातःसवने नकल्पो व्याख्यातः। द्विदेवत्यर्तुग्रहेन्द्राग्रवै
श्वदेव दार्विहोमाश्वनाविद्यंते। शुक्रामंथिनो संतुग्रहाणामुक्थ्यस्य पा
त्रैः कलशे श्वमसेः परिप्लवयाश्च हप्रयोजनं। प्रातःसवनतान्यत्र ग्रहं
तेहियहास्त्रयः मरुत्वतीयाधर्म श्वमाहेंद्रं चैत्स्युभाविमो। प्रतिग्रह्याश्व हू ॥१६९
यंते आप्तः [illegible]  [illegible] दति ग्राह्य स्त्राभिः
सह। दक्षिणस्य हविर्धानस्य पुरोक्षमस्पर्ष्टं चक्रेण सादयित्वा तूष्णी

ममाभिमंत्र्य ते सर्वेध्वर्यवो दक्षिणैः पाणिभिः इन्द्रा इहेति ग्रावभिः संराधयंतो
भिषुण्वंति सति निमित्ते अध्वर्युः आमास्कान्द्स स्वस्कंदेत्साभिमंत्रयते।
प्रागपागुदगधः स्वर सर्वे निग्राभमुपयंति। एवं प्रथममभिषुत्य वस
तीवरीभिरुपसज्याबोद धंव इत्यभिमंत्र्य सर्वे दक्षिणैः पाणिभिः इ
हाइहेति संराधयंतो भिषुण्वंति। एवं द्वितीयमभिषुत्य तथैव वसती
वरीभिरुपसज्याबोद धंव इत्यभिमंत्र्य सर्वे दक्षिणैः पाणिभिः इहा
इइहेति संराधयंतो भिषुण्वंति अध्वर्युः आमास्कान्द्स स्वस्कंदेत्से
तयोः कृतयोः प्रागपागुदं स्वरेति निग्राभमुपेति एवं तृतीयमभि
षुत्य राजानमाधवनीये संसिच्य पुनर्द्वितीये पर्याये वसतीवर्यु

वसतीवर्युप
पसर्जनावीवृधाभिमंत्रेणे हा२ इहे तिसंराधनाभिषवान्कृत्वा पुनर्वसतीवर्युप
सर्जनावीवृधाभिमंत्रेणे हा २ इहे तिसंराधनाभिषवामास्कान्द्रप्सानुमंत्रण
प्रागपागितिनिग्राभंकृत्वा पुनस्तथैव कृत्वा राजानमाधवनीये संसिच्य। त
तीये पर्याये वसतीवर्युपसर्जनावीवृधाभिमंत्रणे हा २ इहेतिसंराधनाभि
षवामास्कान्द्रप्सश्चस्कंदानुमंत्रण प्रागपागुदङिग्राभो पयमनानिकृत्वा
मध्यमे पुनस्तथैव वसतीवर्युपसर्जनावीवृधाभिमंत्रण इहहइहसंराधना
दिनिग्रापापयमुनानिकृत्वा मध्यमे। पुनस्तथैव वसतीवर्युपसर्जनावीवृधा
वृभिमंत्रणे हा२ इहेतिसंराधनादिप्रागपागुदङिग्राभोपयमानानिकृत्वा
सुसंभृतंराजानंकृत्वा पवित्रेण अपीड्यापरेग्रावाणः संमुखान्कृत्वा तेभ्यः स

१२

जीबंव्यपोह्य स्रजीषमुखा न्करोति। प्रांचमुद्गाता रो द्रोणकलशं ग्रावस्व
ध्यूहति। देवाग्रावाणं इंदुः [illegible] रिंद्रइत्यवा दिषुरेंद्रम॰ धिषुरपहतब्रह्मे
ज्यस्य। इति प्रतिप्रस्थाता ग्राव्णा नुमोदते। अत्रवा सवनीय निर्वापः। प
वित्रं ते विततं॰ स्तत्समा राते ति तस्मिन्नुदीचीन दशं पवित्रमुद्गातारो
धारयंति। अध्व॰ पवित्रं तस्त्वन येव पवित्रमभिमंत्रयते। होतृचमसेना
स्मिन्संततां धारां स्त्रावयति। आधवनीया दुन्नेतो दंचनेन होतृचमस
आनयति। त्रवेसा धारा स्याग्रहान्गृह्णाति। अध्व॰ शुक्रपात्रमादाय।
अयं वेन श्चोदय॰ रिहंति। अनुद्रुत्यो पयम्य। उपया॰ सि शं॰ ग यत्वेति
गृहीत्वा हिरण्येन श्रीणाति [illegible] एष ते योनि वीरतां पाहि

तिसादयति। मंथिपात्रमादाय तं प्रलं धा पूर्वेधा० वर्धसे। इत्यनुद्रुत्या पय
म्य। उपया०म कौ यत्ले तिगृहीत्वामनो न्थेयेव्धितिसक्तुभिः श्रीत्वा आत्मा
नमितरा ग्रहेभ्यो ध्वंसयन् दशापवित्रेण संमृज्य यते यो निःप्रजाः पा
हीतिसादयति। येदेवा दिव्येकादश० ध्वरस्या ग्रयणपात्रमनुद्रुत्य। उपया
०सि विश्वेभ्यस्त्वा देवेभ्यः इत्याग्रयणं तिसृभ्यो धाराभ्यो गृह्णाति। पुरस्ता
दुपयामं नयजुषा गृह्णाति। आग्रयणस्थाल्यां यः सोमस्तस्यैकदेशं अ
न्यस्मिन्पात्रे निःषिच्य द्वितीयां धारां करोति आधवनीयात्तृतीयां धारा
मुदंचनेन करोति एवमाग्रयणं गृहीत्वा त्रिर्हिंकरोति। शनैरग्रेथो ३ स्थ
सूक्तैः तथैवसोमः पवते ३ अस्मै ब्रह्मणे पवते स्मै क्ष० महंज्येष्ठ्याय

पवते। इतिसोममभिमंत्र्य दशापवित्रेण संमृज्य एषते योनिर्विश्वेभ्यस्त्वा देवेभ्यः
तं इति सादयति। उपया० सीन्द्राय त्वा बृहद्वते वयस्वतउ० त्वाविलवेलेतिस्था
ल्योक्थ्यं गृह्णाति। एषते योनिरिंद्राय त्वोक्थ्यायुवे ति सादयति। सतुपात्रा
भ्याम ध्वर्युप्रतिप्रस्थातारौ मरुत्वतीयौ स्वेन २ पात्रेण गृह्णीतः। अध्वर्युः
मरुत्वतंवृषभंवाव० तं २ हुवेम इति स्वमृतुपात्रमुद्धृत्योपयम्य उपया०
सीन्द्राय त्वा मरुत्वत इति गृहीत्वैषते योनिरिंद्राय त्वा मरुत्वत इति साद
यति। एवं मरुत्वतीयौ गृहीत्वा राजानमतिसादयति यावंतंमाध्यंदि
नाय सवनाय पर्याप्तं मन्यते विरमति धारा अपी० पवित्रं निदधाति
पूर्ववद्देकधनानामेकदेशमाधवनीयेंतिरः पवित्रं पूतभृत्स्ववनयति। १५४
वनीय
प्रतिप्रस्था० मरुत्वंतं वृषभं० सुनीना इतिस्वमृतुपात्रमुद्धृत्योपयम्य उप० सीन्द्राय त्वा मरुत्वत इति०
गृहीत्वैषते योनिरिंद्राय त्वा मरुत्वत इति सादयति।

ततःपावमानग्रहान्गृह्णाति।उपयामगृहीतोसिप्रजापतयेत्वेतिद्रोणक
लशमभिमृशेत्।उपया० सीन्द्राय त्वेत्याधवनीयं।उपया०सिविश्वेभ्य
स्त्वा देवेभ्य इतिपूतभृतमभिमृशतित्रीन्कलशान्छुक्रादींश्चतुरोग्रहा
न्पूर्ववदुपतिष्ठते।द्रोसमुद्रोवि०तुनातियंसन्यमितिद्रोणकलशाधव
नीयावुपतिष्ठते।दृद्रघसी स० जार्यै।इतिपूतभृतं।परिभूरग्निं०ग्रसव
चेसमुन्मजे।इतिसर्वसोमं।चक्षुर्भ्योमेवर्चो दोवर्चसेपवेथां।इतिशुक्रा
मंथिनौ।आत्मेनेमेवर्चोदावर्चसेपवस्वेत्याग्रयणं।अंगेभ्यामेव० वस्व
त्युक्थ्यं।विष्णोर्जठरमसिव०वस्वेतिद्रोणकलशं।इन्द्रस्यजठरमसि
वर्चो०पवस्वेत्याधवनीयं।विश्वेषां देवानांजठरमसिवर्चो०वस्वेतिपूत

भ्तं। कोसिको नाम कस्मै त्वा का० क्षीयतस्पते ब्रह्मव चे समुन्म्रजे इत्यविशेषेण
स्वे राजानमुपतिष्ठते। उपकल्प्शादूत्यादि षट्। इति सर्वत्र। अत्र भाष्य कं
ध्व्लोकः। होदु परिभूश्चक्षुर्भ्यो मात्मने गोभ्य एवे चु। विष्णो रिंद्रस्य विश्वे षां
कोसिकः कलश्चादि षट्। निः सर्पतः समन्वारभते अध्वर्युप्रस्तोता ब्र
[illegible] तं प्रति हर्त्तोतमुद्गाता तं ब्रह्मा तं यजमानो न्वारभते। अध्वर्युर्निः स
प्या। यस्ते द्रप्स स्कंदति० यो द्रप्सो अं० यस्ते द्रप्सो म० यस्ते द्रप्स स्कंदति य
स्ते अं ९ शुः स्वः परस्त्र यो दिवः परः अयं देवो बृहस्पतिः सं तं सिं चतु रा
घसा स्वाहा। मृहा हविर्होता इत्यादि वा चस्प ते हृद्वि धेना० नमः पृथिव्ये
स्वाहा वाचस्पतये ब्राह्मण इदं। ब्रह्म यजमान यो होमः मैत्रावरुण एत

स्मिन्काले विप्रुड्ढोमौ हुत्वा सहस्रसर्पणं करोति उदंचः प्रह्वा माध्यंदिनं पव
मानं सर्पंति। त्रैष्टुभः पंथा रुद्रा देवता दक्षिणो केपरिपरेण पथा स्वस्ति रुद्रा
न शीय वागग्रेमा अग्र एत्व० यजमानेचेति। उत्तरेण हविर्धानं गत्वो त्तरे
णाग्नीध्रीयं धिष्ण्यं परीत्यो त्तरेण सदो हविर्धाने गत्वा दक्षिणेन मार्जा
लीयं परेत्यो त्तरेण सदो हविर्धानं गत्वा पूर्वया द्वारा सदः प्रविश्य दक्षि
णेन प्रशास्त्रीयमौदुंबरीं च गत्वा यथायतन मुपविशंति। छंदोगानु
सारेण वा सर्पणं। वायुर्हिंकर्ताग्नि० प्राणं मयि दधत्वु बर्हिर्मुष्टिं प्रयच्छ
न्स्तोत्र मुपाकरोति अ सज्ये सर्जि वागसज्येंद्र॰ सहो सज्यु पावर्त्तध्वं
अभिसर्पय जमानेति। यजमा० इडायै हिंकुरुतस्यै प्रस्तु हितेस्येमवरु

५६

ध्यै व्याहृतीश्चतुर्होतारं पंचहोतारं च जपति। ब्रह्मा देव सवितरेतत्ते प्रा॰तुः
प्रसवे। विष्टंभोसि वषट्ये त्वा वृष्टिं जिन्व ओ३ं स्तुदेति प्रसौति यजमा॰ सु
पर्णोसि त्रिष्टुप्छंदा अ॰ सं पारय। इति मध्यमायां स्तोत्रियायामुपाक
रणद्रव्य मन्वारभ्य स्तुतस्य स्तुतम॰ रयी णामिति जपति। माध्यंदिने
पवमाने स्तुते ब्रह्मयजमानौ यथेत प्रत्येत्य यथायतनमुपविशतः। अ
ध्वर्युः अग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशां अलंकुरु प्रतिप्र
स्थातर्दधिघर्मेण चरेति संप्रेष्यति। अयं प्रैषः पूर्वं निर्वापे पक्षे यदा
ग्नेर्निर्वापस्तदा पुरोडाशा ३ं अलंकुर्विति संवल्प्यते हविर्धानं प्रविश्य
विलोलयन्नो अंतमः इ॰ नेअत स्त्रिभिः इति य्र हानुपतिष्ठते पुनर्विलोलयन्नो

१५६

इतिसोमपात्राण्यभिमृश्यात्ति। आग्नीध्रः आग्नीध्रीयादंगारानाहत्य प्रत्यङ्मु
खः वह्निरसि हव्यवाहनो रौ० सीरिति होत्रीयेंगारा प्रक्षिप्य मैत्रो सिप्र
चेता रौ० प्रशास्त्र धिष्ण्ये। तुथोसि प्रचेता रौ० ब्राह्मणा छंसि धिष्ण्ये। उशि
गसिकवी रौ० पोतृ धिष्ण्ये। अंघारिरसि बंभारी रौ० नेष्टृ धिष्ण्ये अवस्युर
सि दुवस्वा न्नौ० अच्छावाक धिष्ण्ये। शुन्ध्यूरसि मार्जालीयो रौ० प्रशास्त्मा
र्गेण मार्जालीये प्रक्षिप्य। अध्वर्युः कश्चिच्चमसे द्रोणकलशात् सरिभृद्वया
राजानं गृहीत्वा प्रचरण्यां मपूर्णो ज्याल्यं च गृहीत्वा गत्वा पुरस्तात्प्रत्यङ्ङ
सीनः सोमेनाहवनीयाद्दीक्षतुरो व्याघारयति। संस्राउसि कृशानू रौ० आ
हवनीयें व्याघार्ये विभूरसी त्याग्नीध्रीये। वह्निरसीति होत्रीयं व्याघार्ये अ

थाज्येन स्वात्रोसीति प्रशास्त्रीयं। तुथोसीति ब्राह्मणाछंसीयं। उशिगसीति
पोत्रीयं। अंघारिरसीति नेष्ट्रीयं अवस्युरसीत्यछावाकीयं अथोसोमेनच्छु
ध्यूरसीति माजोलीयं व्याघारयति। घेल्ये देशा किंचिदपसृत्यवष ट्
करोति। अग्रेणाहोतारं पुरस्तात्सत्यङासीनः नचक्षसं त्वेत्यवेक्ष्य प्रतिप्र
स्थात रूप हूयस्व। मंद्राभिभूतिरितिवाग्देवी सोमस्य पिबात्विति वा हिन्व
म इत्यादि पूर्ववत्सोमं भक्षयति। आग्नीध्रः संततमनुपृक्तां बर्हिस्तीर्त्वा पु
रोडाशानलंकरोति। कर्मणेवां दे० केयं। देवो वः सविता मध्वानक्तु॰ देवस्त्वा
सविता मध्वानक्तु॰ अलंकृतेषु प्रतिप्रस्थाता दधिघर्मेणचरति यदि पू
र्वं निरूप्तं पूर्वमनिर्वापेतु आग्नीध्रेण बर्हिषि स्तीर्णे प्रतिप्रस्थाता पशु

पुरोडाशं निरूप्य सवनीयान्निर्वपति। तत्र विशेषः एकादश कपालानि सवनी
यस्य पशुपुरोडाशस्य अग्नीषोमीय विकारत्व पक्षेउभयोरप्येकादशानास्या
मिक्षात्तत्र पूर्ववद्व्रीहिषु कर्माणि कृत्वा यवेषु करोति अग्नये जुष्टमिति पशुपुरो
डाशार्थे व्रीहीन्निरूप्य ततो धानार्थेयवान्निर्वपति ततो लाजार्थे पुरोडाशा
र्थे व्रीहीन्निर्वपति अग्ने हव्यꣳ रक्षस्व इन्द्र हरिवन्हव्यं रक्षस्वेत्यादि अग्नये
वो जुष्टं प्रोक्षामीन्द्राय हरिवते वो जुष्टमित्यादिना प्रोक्षितेषु व्रीहीन्विभ
ज्य यथाभागं व्यावर्त्तेथां इदमग्नये इन्द्राय इदꣳ सरस्वत्यै भारत्यै व्रीहीनु
व हृत्य यवानवहंति। पशुपुरोडाशस्य कपालान्युपदधाति सवनीयाना
पूर्ववदुपदधाति। पिष्टानां संवपनं कृत्वा सूप्यतंडुलान्व्रीहीश्चाक्षुनाति।

यथाभागं व्यावर्त्तेथामितिविभज्ये दमग्नयइदमिंद्राय पशुपुरोडाशमधि
श्रित्य धाना लाजांश्च समो प्य सवनीयं पुरोडाशमधि श्रयति। पशुपरो
डाशंला जांश्चाभिघार्य तूष्णीं पुरोडाशमभिघार्य पशुपुरोडाशमुद्वास्य य
थाविकारं सवनीयानुद्वासयति उक्तं करंभसंवपनं। आग्नीध्रः पुरोडा
शानलंकरोति। पूर्वे निर्वापिप्ययमेव प्रकारः पशुपुरोडाशानिर्वपण
पूर्वकमेव निर्वपणं निरूप्येति गुदनिर्देशादन्यथा पशुपुरोडाशं सव
नीयांश्चेति ब्रूयात। प्रति प्रस्थाता दधिघर्मेण चरति। यावती द्यावा
पृथिवी महित्वायां० हाम्यस्तं। इत्याग्नीध्रागारे औदुंबर्यां स्रुचिद
धिग्रहं गृह्णाति। वाचस्त्वा मनश्च श्रीणातां प्रा० च० द० मा० मा० मा त्मा०

प्रायत्वाश्वतेभ्यस्त्वा। इत्याग्नीध्रीयधिश्रित्यहोतवेदस्त्वयन्नेवाघामितिसं
प्रेष्यति होत्रायदि श्रातो जुहोतनयद्यश्रातोममत्तनेद्युच्यमाने श्रातं हवि
रितिप्रत्याहतमादायाहवनीयंगत्वा आश्रा० अस्तु० दधिघर्मस्ययजेति
संप्रेष्यतियमिंद्रमाहुर्वरुणंयमाहुर्य० त्वातेभ्यस्त्वास्वाहावषट्कृते जु
होति। इन्द्रायेदमनुवषट्कृतेनूष्णीं हुत्वा हरति भक्षं अग्नयेस्विष्टकृतइदं।
भक्षंभक्षयति। येप्रवर्ग्येतरस्यारण्येनुवाक्यो भक्षमंत्राः प्रथमेनानुवा
केनशांतिं कृत्वाप्रवर्ग्यवदुपहूयभूर्भुवःसुवः मयित्यदिंद्रियंमहन्मयि
द० ब्रह्म० क्ष० स० तो भक्षयामि। उत्तमेनानुवाकेनशांतिः मयित्यदिंद्रिय
मित्यां छिद्रकेणभक्षणेनशांतीइति प्रख्यातांशुरोडाशानाहरति। अग्नि

१५९ प्रतिप्रस्थाता पुरोडाशानाहरति। प्रियेण नाम्ना० सीदेदं। यजमा० अग्नीषोमीय
विकारपक्षे प्रजापतिरसि० अन्यत्र यष्टा(सि)। पृथु पुरोडाशमभिमंत्र्य योनः
कनी यइति धानाः योनः अपतमिंद्र पू० करंभं। यइशासीति परिवापं। योनः क
नीय इति पुरोडाशं। अयंयज्ञः पंचहोत्रा च आसनानि हवींष्यभिमृश्यति
ततोध्वर्युः जुहूपभृतो रुपस्तीर्य माभेरित्यादि स्विष्टकृतेवेदायनाभिघार
यति न जुहोति। अग्नये पुरोडाशस्यानुब्रूहि आश्रा० अस्तु० अग्निं पुरो
डाशस्य प्रेष्य अग्ने रहं० यान्नादो० पक्षे वनेहा। जुह्वामुपस्तीर्य माभेष्ट १५८
त्यादि जुहूपभृतोः समवदायाभिघार्य सवनीयैः प्रचरति। माध्यंदिन
स्य सवनस्येंद्राय पुरोडाशानामनुब्रूहि सप्रेष्य। अत्यात्र्या श्राव्यत्र

स्याश्राव्यमाध्यंदिनस्यसवनस्येंद्रायपुरोडाशान्प्रस्थितान्प्रेष्येतिसंप्रेष्य
वषट्कृते जुहोति। इंद्रायेदं॰ इंद्रस्याहृदे॰ ऐंद्रियाव्यंनादोन्नादइंद्रियाव्यंना
दोभूयास॰ पशुपुरोडाशंसवनीयानांओपभृतंजुहूंकृत्वा पर्यस्य अग्नयेनुब्रूहि
न्नयेप्रेष्यवषट्कृते जुहोति। अग्नयइदं॰ अग्नेरहेदे॰ यासुष्मान्यः॰ अग्नि
मोदुरिष्टा॰ अध्वर्युः पशुपुरोडाशंपरिवापुंविरुज्यप्राशित्रमवदायने
डामवद्यति। आधवनीयंपूतभृत्सवनीयदर्शभिः कलशंमध्वान्युन्नातिउ
यमानेभ्यानुब्रूहिहोतुश्चमसमनूंनयध्वमुभयतः शुक्रान्कुरुध्वमच्छावा
कस्यचमसाध्वर्योपिलमुन्नयसंप्रोतिप्रस्थातःमोक्षितांछ्कलानुपक
ल्पयेति ततः सोमप्रभावयेतिसंप्रेष्यति होतृचमसमुख्यानेकादशचमसा

श्रीः

९० तुन्नयति पुरस्तादाग्नीध्रचमसादच्छावाकचमससुन्नयति ततइतरानुन्नयंति। उ
न्नेता परिप्लवयाद्रोणकलशादुपस्तीर्य पूतभृतउन्नीयद्रोणकलशादभिघा
र्य सादयति। सर्वचमसानामेष कल्पः। देवस्यत्वा॰ ददे। इत्यध्वर्युः शुक्रग्रह
मादत्ते ततो नैव प्रस्थाता मंथिनं। तूष्णीं। संस्कृताभिरद्भिः प्रोक्षिताभ्यां शकं
लाभ्यां शुक्रामंथिनावपिधत्तः अपनुत्तः शंडः सहपाप्मना। अपनुत्तो मर्कः
सहपाप्मनेति अप्रोक्षिताभ्यां शकलाभ्यामधचत्वालां सूनपध्वंसयतः ताभ्या
स्तु मेव शकलाभ्यां स्वंस्वमुपयच्छति। अध्व॰ [illegible] तो सिज॰ शुक्रपाः प्रणयंत्वि
ति शुक्रं हरति। प्रतिप्र॰ स्तुतो सिजन॰ मंथिपाः प्रणयंत्विति मंथिनं हरति। १९०
उर्वंतरिक्षमन्विहीति गच्छतः अनुपश्चाच्चमसाध्वर्यवः प्रांचोनुपूर्वं गच्छंति।

विधोनेअ
तान्दक्षिणेनाध्वर्युरुत्तरेण प्रतिप्रस्थातासर्वै निष्क्रामंतिअग्रेण हविर्धाने अध्वर्युर्दक्षि
णेनाग्रेणाशुः संधत्तामित्यादिवाचं संधत्तामित्युत्तरेण संधत्तः अध्वर्युर्दक्षि
णेनगछत्युत्तरेण प्रतिस्थ्या० अपरेण चमसाध्वर्यवस्तिष्ठंति। उभौ अनाध
प्रासीत्यं गुष्ठाभ्यामुत्तरवेदिं लिखंतौ विपरिक्रामतः। अध्व० सुवीराः प्रजाः
प्र० शुक्रः शुक्रशो चिषेति दक्षिणेन हरति। प्रतिप्र० सुप्रजाः प्र० मंथीमथि
शोचिषेत्युत्तरेण हरति यजमा० ग्रहो जिन्वेथा सुपथ्यामध्वावीतमित्य
नुमंत्रयते। उभावग्रेणाहवनीयमभितो यूपं पुरस्तात्प्रत्यं चावव तिष्ठेते पश्चा
त्प्रांचश्चमसाध्वर्यवस्तिष्ठंति। अध्व० संजग्मानो दिव आपृथिव्या शुक्रः
शुक्रशोचिषा० प्रतिप्र० संजग्मानो दिव० मंथी मंथिशोचिषेति तं भावर

१६१

लिपानेवासंधत्तः उभौ आयुस्थ आयुर्मे धत्तमित्यादिमयि च यजमाने चेति स्वं
स्वं ग्रहमनुमंत्रयते। अध्व० शुक्रस्याधिष्ठानमसि शुक्रे यातेस मित्तया स
मिध्यस्व स्वाहेति स्वं प्रोक्षित शकलमादधाति। प्रतिप्र० मंथिनोधिष्ठानम
सिमंथिन्ने यातेस मि० ध्यस्व स्वाहेति प्रोक्षितं शकलमादधाति शुक्रामंथि
भ्यामिदं निरस्तः शंडः सह रूपाण्भनानिरस्तो मर्कः सहरूपांभनेति अप्रोक्षितौ
शकलौ वर्हिर्वेदिनिरस्यतः अप उपस्पृशतः अध्व० आश्राव्य प्रत्याश्राव्य
माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतां मंथिवतो मधुश्च
त इंद्राय सोमान्प्रस्थितान्प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृ

१६१

तानुवषट्कृता [illegible] कृत्वा शुक्रस्या

स्युन्नीयो पावर्तध्वेमिति संप्रेष्यति। यजमान॰ अग्निर्नस्योतरयिपते सुवी
र्यस्येंद्रेण सयुजो वयमिति श्रुक् हूयमानमन्वारभते। स वै वषट्कृते युगप
ज्जुहुति। स प्रथमः संस्कृति र्विश्व॰ इंद्राय सुतमाजुहोमि स्वाहा इत्यध्वर्युर्जु
होति प्रतिप्र॰ स प्रथमसं॰ स्व मित्राय सुतमाजुहोमि स्वाहेति जुहोति। इंद्रा
येदं। मित्रायेदं॰ प्रतिप्र॰ बर्हिः परिध्यंत र्वेदि आहुतीधारणसामर्थ्यंगारस्थू
ल्य तस्मिन् एषते रुद्र भागो यन्निरय्यः॰ ९ रु. स्ति ९ स्वाहेत्येतं मंथिनः संस्रा
वं सर्वहुतं जुहोति। रुद्राय वास्तुपत इदं। मध्यतः कारिणां चमसाध्वर्यवो
नुवषट्कृते जुहुति। अग्नये स्विष्टकृत इदं॰। अध्वर्युः प्रेतरुतु चमसः प्र
ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्रसदस्य स्येति संप्रेष्यति। अध्वर्यु प्रति

प्रस्थातारो। यथैतं प्रत्यागच्छतः अध्वर्युः सूदवच्छुक्रपात्रमायतने सादयति। प्र
तिप्र० अस्सूदमेव मंथिपात्रमायतने सादयति। मध्यतःकारिणां चमसान्स
दो हरंति। होत्रकाणां चमसाध्वर्यवो हविर्धानं प्रविश्य शुक्रेण स्वं स्वं चमस
मुन्नीयाहवनीयमुपावर्त्तते। अध्वर्युस्तैः प्रचरति। मैत्रावरुणचमसमादा
य आश्रा० अस्तु० प्रशास्ता यजेति संप्रेष्यति। वषट्कृतानुवषट्कृतयो
र्हुत्वा चमसाध्वर्यवो चमसमपघ्नंति। इंद्रायेदं अग्नये स्विष्टकृत इदं। च
मसाध्वर्युः सदो भक्षं हरति येन मार्गेण यो यः सदः प्रविष्टस्तेन तस्मै च
मसमाहरति। तेनैव प्रत्येत्य प्रत्याहरति अध्वर्युरेव मुत्तरैः प्रचरति। आ    १६२
श्रा० अस्तु० पोतर्यजेति पोतारं। वषट्कृतानुव० जुहोति। इंद्रायेदं अ

प्रस्त्यज। प्रास्मण ... तानुवषट्कृते जुह्या० इंद्राय० अग्नये स्वि ष्ट
मद० आश्रा० अ

ग्नयेस्विष्ट॰ आश्रा॰ अस्तु॰ नेष्टर्यज वषट्कृतानु वषट्कृते योर्जुहोति। इं
द्रायेदं अग्नये स्विष्टकृते इ॰ अध्वर्युश्चमसमादाय सदो गच्छति। स होतुरया
* आश्राव॰ अस्तु॰ अच्छावाकयज वषट्कृतानु॰ होति। इंद्रायेदं अग्नयेस्वि॰ आश्रा॰
अस्तु॰ अग्नीद्यज॰ वषट्कृतानु॰ होति। इंद्रा॰ अग्नये॰ × अग्नीदित्याचष्टे। स भद्रम
कर्यो नः सोमं पाययिष्यतीति होता प्रत्याह। अध्वर्युः इडामवदाय होत्रे इडामा
दधाति। यजमानभागमवदाय उपहूयमानामु ॰। गृह्णंते चमसांश्चमसा
ध्वर्यवः नेडाशाकलमच्छावाकाय निदधाति। उपहूयमानां होतृचमसमु
स्पष्टं धारयति उपहूतां प्राश्नंति ये भक्षंतीति॰ प्रतिप्रस्थात सहोमाः प्राश्नं
ति। मैत्रावरुणः प्रतिप्रस्थाता च मार्जयेते पञ्चपुरोडाशशलाकां। श्चैतं च धा

कृत्वा स्वस्वभागैः सह यजमानस्य समाह्य हविः शेषान् भक्षयति। ततः प्रतिप्र०
पिष्टलेपफलीकरणहोमौ जुहोति। यजमानः प्रणीतासु मार्जयते प्रति
प्र० तोपवेषोदसनं कपालविमोचनं च करोति अथ चमसभक्षणं स
र्वेषां प्रथमो होता भक्षयति द्विः स्वचमसे प्रथममनुपहूय भक्षयति इतरेषां च
मसिनां चमसिषूपहूय भक्षयति अध्वर्युर्होत्रकाणां चमसेषु होतारं होत्र
कांश्चोपहूय भक्षयति ततो होत्रका होत्रध्वर्यू उपहूय भक्षयति अध्वर्यु
श्च तस्य तस्य भक्षणानंतरं होतर्यि तोरितस्मिंश्चोपहूय भक्षयति ततो हो
तास्वचमसमादायानुपहूय समाख्याभक्षं भक्षयति। ततो मध्यतःका
रिणः होतर्युपहूय समाख्याभक्षं भक्षयंति होत्रका होत्रध्वर्यू चोपहूय

१६३

समाख्या भक्षं भक्षयंति। तत्र श्लोकाः वषट्‌कर्तुः प्रथमभक्षः सर्वेषां चमसानां सकृ
त्सकृत् होतादौ भक्षयेत् स्वस्वाङ्होत्रकाश्च यथा यथं। भक्षयेयुर्वषट्‌कारा
दध्वर्युश्च प्रदानतः अंते चमसिनः स्वं स्वं भक्षयेयुः समाख्यया। तत्र हो
तुरुपाह्वानं चमसे स्वेन विद्यते। अभावाद्दक्षिणो होता होत्रा चाध्वर्युणा
सह। उपहूयते होत्रकाणां चमसेषु यथाक्रमं इति भक्षणविधिः अथ
भक्षणमंत्राः अध्वर्युः न चक्षसं त्वेति स्वयमाह्रियमाणमवेक्ष्य मंद्राभि
भूरिति वाग्देवी सोमस्य पिब त्विति वा भक्षयति अन्येनाह्रियमाणं भ
क्ष भक्षेहि मा॰ हृदो सीमं तेन प्रतीक्ष्य अश्विनोस्त्वा बाहुभ्यां सघ्या
सम् इति प्रतिगृह्य न चक्षसं त्वेति वेक्ष्य मंद्राभिभूतिस्य नु कुल होतरुप

१६८ ह्वयस्व। प्रतिप्रस्थातरुपह्वयस्वह्वयद्रणस्येत्यादिनाभक्षयामीत्यंते
नवाग्देवी सोमस्य पिबत्विति भक्षयित्वा हिन्वमे इत्यात्मानं प्रत्यभिमृशति।
सर्वेषां सोमभक्षाणामयं प्रकारः होतृका अंततः सशेषान्भक्षयित्वा
सर्वे चमसिनः स्वंस्वं चमसं आप्यायस्व समे॰ संगथे इति वसतिवरी
भिराप्याययंति। ते नाराशंसा भवंति। तान्नाराशंसान्सादयंति सन्ने
षु नाराशंसेषु दक्षिणेन वेदिमवस्थितासु दक्षिणासु दाक्षिणानि जु
होति यथावैसर्जनानि दक्षिणेन वेदिमवस्थितासु दक्षिणासु गवादि
द्रव्येषु। रुमायि व्रतानि ह्वयध्वमिति संप्रेष्यति संह्वयंते यजमानस्या
मात्या अध्वर्यु यजमानो [illegible] यजमानस्याम

नस्यामात्यास्तानहतेनवा ससाप्रच्छाद्य जुहुयामेव चतुर्गृहीतंगृहीत्वा प्रच्छ
ण्णावा प्रच्छादनार्थस्यवाससो दशायां हिरण्यं बध्वाज्येवधाय स्रुग्दंडवा
ससोंतमुपनियम्यशालामुखीये उदुत्यं जातवेदसंदे० यसूर्य९ स्वाहा सू
र्याये० चित्रंदेवानामु० स्थषश्च स्वाहा सूर्यायेद ३० प्रमाज्यस्यकरोति। ततो
यजमानः किंचिद्द्वौ किंकमाज्यंहिरण्यं चपात्रेणादायस्रुवेणवा स्रुवमभ्ये
मिवयसावयः इत्यभ्येति। तुथोवो विश्ववेदाविभजतु वर्षिष्ठे आधिना
केइतिमध्यमवक्रेभ्यं विभजाति द्वादश द्वादश। मध्यतः कारिभ्यः षट्षट्
द्वितीयेभ्यः चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्रस्तृतीयेभ्यः अने
नक्रमेणशतंविभज्य शताधिकं गवादिजीवद्द्व्यागिनिहनमाज्यनकु

१६५

योतएलत्तेअग्नेरा धैरैतिसोमच्युतं तन्मित्रस्यपथानयेतिविभक्ताआनयति।
अग्रेणप्राग्वंशंअपरेणसदोदक्षिणेनाग्नीध्रीयंअंतरेण चात्वालोत्करावुदी त
चीरुत्सृजति। नीत्वास्थापयति। सतस्यपथाप्रेत चंद्रदक्षिणा यज्ञस्य पथा
सुविता नयंती: इतिगच्छंतीरनुमंत्रयते एवं यजमानेन नीयमानासुद
क्षिणासु। अध्व॰ अग्नेनय॰ धेमस्वाहा। अग्नयइदं आग्नीध्रीयेजुहोति
शेषमाज्यस्यकरोतिद्विगृहं सुवः पश्चेतिहिरण्यं घ्नताद्धृत्य उत्तरे
आहुती जुहोतिसातिस्रं भवेबर्हिर्वेदिस्थितानां दक्षिणानांआग्नीध्रस्यभा
गः यजमा॰ आग्नीध्रभागं हिरण्यंचादाया ग्नीध्रागारआसीनमाग्नीध्रं।
ब्राह्मणमद्यराध्यासम॰ सुधातुदक्षिणंइत्याग्नीध्रमभ्येतिअनेनैवमं १६५

त्रेण हिरण्यं दक्षिणाभागं चाग्नीध्रे ददाति सयाजुषेण बद्धचेनवाविधिना प्रति
गृह्णाति। यजमानः विखुवः पश्च व्यंतरिक्षंयतस्थ सदस्यैः इतिसदः प्रेक्षते।
अस्मद्दात्रा देवत्रागच्छ तमधुम॰ तन्नः स ॰ स्कृतं। इति दक्षिणाः प्रेक्षते। बहिः
स्थितास्त्वेव दक्षिणासु पूर्वेण द्वारेण सदः प्रविश्यत आसीनायात्रेयाया नू
नाया चानुपुत्रायवोत्तमं क्रतु दक्षिणाव्यतिक्तं स घृतं हिरण्यं स हपात्रेण ददाति भा
ब्राह्मणमद्यराध्यासम॰ दक्षिणामितिमं त्रेण सदस्यादिभ्यायस्ते व्यतिरि
क्तमेव। अथार्त्विग्भ्यो दक्षिणां ददाति। ब्रह्म दक्षिणाभागमादाय ब्रह्म सद
नमासीनं ब्राह्मणं ब्रह्मन्मन स्तेददामि तदनेन निष्क्रामीदं तेददामीति
यद्वास्य-मवनित द्ब्रह्मणेनु दिश्यति एवमितच्चे से तब्रह्मणे ब्रह्मसदन

आसीनायदक्षिणांददाति होतर्वाचं ते ददामि तामनेन निष्क्रीणामी दंते ददामी
ति होतृषदन आसीनाय होत्रे। अध्वर्यो प्राणं ते ददामि तमनेन निष्क्रामी दंते
ददामी त्यध्वर्यवे हविर्धानआसीनाय। उद्गातश्चक्षुस्ते ददामि तदनेन नि
ष्क्रीणामी दंते ददामी त्युद्गात्र ओदुंबर्यामासीनाय होत्रकाश्रोत्रं वो ददा
मि तदनेन निष्क्रामी दं वो ददामि। इति होतृकेभ्यः अंतःसदसं यथाधिष्ण्य
मासीनेभ्यः प्रतिप्रस्थातः प्राणं त इत्यादि उन्नेतः प्राणं त इत्यादि ग्राव
स्तुघ्रोत्रं ते। वाचं त इति वा। प्रस्तोतः प्रतिहर्तुश्चक्षुस्त इत्यादि सुब्रह्म
ण्य चक्षुस्त इत्यादि सदस्य आसीनत इत्यादि चमसाध्वर्यवो गानि इत्या
दि। सर्हैव प्रसर्पकाला मानि वो ददामि। तान्यनेन निष्क्रीणामी दं वो ददामि।

इति प्रत्येकं लौकिकनाम्नस्तान् किंचित्स्वरूपं केभ्यश्च ददाति। आत्रेयायपवानीतासु
दक्षिणासु प्रतिग्रहमंत्रास्त्वग्रे वक्ष्यंते यजमानः हरिणस्य रघुष्यतोधिशीर्षा
णि भेषजं स क्षेत्रीयं विषाणया विषूचीनमनीनशा २। अनु त्वा हरिणो मृगः
पद्भिश्चतुर्भिरक्रमीत् मा त्विभूम्ना पदा कुरिति विषाणं चात्वाले प्रास्यति।
अध्वर्युः आग्नीध्रीये पूर्वाज्यात् पंच गृहीतं गृहीत्वा जुहूं प्रत्याहुतिसमिधोम्या
धाय वैश्वकर्मणानि जुहोति। यज्ञपतिमृषय एनसा हुः प्रसृजतु विश्वकर्मा
स्वाहा। विश्वकर्मण इदं। पंच सु घोरा सषयानमो अस्त्वेभ्यः च० उपाल स्मा
स्वाहा। २ अनन्या सोमपान्मन्यमानः प्रा० मुंचास्वस्तये स्वा ३ ये भक्षयंतो
न वसून्यानहुः या० तु विश्वकर्मा स्वा० ४ नमः पितृभ्यो अभि ये नो अ० सः पा

६७

पयिष्टस्वा॰५ अध्वर्युप्रतिप्रस्थातारौ यथागृहीतं मरुत्वतीयावादायाध्वर्युरिंद्रा
यमरुत्वतेनुब्रूहिंद्राय मरुत्वतेप्रेष्य। वषट्कृतानुवषट्कृतयोरुभौजुहुतः
इंद्रायमरुत्वतइदं॰ अग्नये स्विष्टकृत॰ संपातौ व्यवनयेते। यथन्ये ग्रहेषुतेध
थाप्रतिप्र॰ ध्वर्योः पात्रे संपातमवनयति अध्वर्युरेकदेशं प्रतिप्रस्थातुः पा
त्रे अध्वर्युः पात्रमायतने सादयति। हो त्रध्वर्युप्रतिप्रस्थातारोन्योन्यस्य
नुपहूय भक्षयंति प्रतिप्रस्थाता नेन द्विर्होता सकृ सकृदितरो मार्जालीये
पात्रं प्रक्षाल्य होतुः सकाशे निदधाति अध्वर्युः स्वेन पात्रेणाभक्षितेन।
इंद्रमरुत्व इह पाहि सोम॰ सुयज्ञाः१० उप॰ सीइंद्रायत्वा मरुत्वते इति तत्ती
यं कलशाच्छन्नं तेग्रहाति एषते योनिरिंद्रायत्वा मरुत्वते। इतिसादस

१६७

ति। इन्द्रदेव हूर्मे॰ मरुत्वं तु। शस्त्रमुपाकरोति। सतुपात्र मारभ्य प्रतिगृणाति।
शो ऽ सामोदइव। ओ थामो दइव ओ शों सामोदइवों यजमा॰ शस्त्रस्य श
स्त्राम॰ रयीणां। अध्व॰ शस्त्रं प्रतिगीर्ये यथा। यतनमतु पात्रं सादयित्वा उक्थं
वाचीतिजपति। अध्वर्यु ग्रहमादत्ते चमसा श्च मसाध्वर्युवः आश्रा॰ अस्तु॰
उक्थशा यज सोमस्य यज॰ इन्द्राय मरुत्वत इदं॰ उर्वेभ्यः पितृभ्य इदं॰ अग्ने
ये स्विष्टकृत इदं॰ व्याख्यातमनु प्रकंपनं ग्रहनाराशंसानां भक्ष आप्याय
नसादने च नाराशंसानां। एतान्सर्वा नैन्द्राग्न एव व्याख्यातं॰ अध्वर्युः महां
इन्द्रोय ओजसा॰ वावृधे। उपया॰ मिमहेन्द्राय त्वेति शुक्रपात्रे माहेन्द्रं कल
शात्सुतमास्त्र...  ...त्यायतने सादयति

स्तोत्रमुपाकरोति। प्रतिप्रस्थातः सवनीयान्निर्वपेति संप्रेष्यति बौधायनवचनात्
उपावर्तध्वं ग्राम्ना देवसवितरेतत्तेप्रा० तुः असते। प्रवास्यहेत्वा हार्भिन्चा। ओ ३स्तु
ता। यजमा० उद्गात्र्योवरंददाति। स्तुतस्य स्तुत० अध्वं० इडा देवहू० शो ३ सो
मोदइव। ओ थामोदइव ओं शो ३ सोमा दइव। ओ थामो दइवो। उक्थं वाचि।
यजमा० होत्रे वरंददाति। शस्त्रस्य शस्त्र० रयीणां। अध्वर्युः अग्नये पथि
कृत इत्यादि। शास्त्रं प्रतिगीर्य ग्रहमादत्ते चमसांश्चमसाध्वर्यवः अतिग्रा
ह्यानितरेध्वर्यवः अध्वर्युः आ श्रो० अस्तु० उक्थ शाय जसोमस्य वषट्
कारे ग्रहं जुहोति। मृहेन्द्रायेदं० वषट्कारएवाग्नेयं प्रतिप्रस्थाता। अग्ने
तेजस्विन्तेजस्वी त्वं० मां तेजो हासीत्स्वाहा। अग्नये तेजस्विन इदं। ऐन्द्रं ने

ष्टा इंद्रो जस्विन्नोजस्वी त्वं देवेषु॰ मामोजो हासी त्स्वाहा। इंद्रायौजस्विन इदं॰ सौ
यमुन्नेता। सूर्य भ्राजस्विन्भ्राजः स्वी त्वं दे॰ मा२ं सुवर्हासी त्स्वाहा सूर्याय भ्राज
स्विन इदं। अनुवषट्कृतेग्रहं जुहोति अग्नये स्विष्टकृत इ॰ उर्वेभ्यः पितृभ्य इ॰
नातिग्राह्यानुभयत्र। भक्षस्तु पूर्ववत् प्रतिप्र॰ मयि मे धाम॰ आग्नि र्दधातु आ
ग्नेयं भक्षयति नेष्टा मयि॰ इंद्र इंद्रियं॰ तु ऐंद्रं भक्ष॰ उन्नेता मयि॰ सूर्यो भ्राजो द
धातु सौर्यं भक्षयति हिच मे ओला॥ नाथाय न सादने भवतः त्रिभिरुक्थ्यग्र
हैः प्रचरतो यथा पुरस्तात्। ग्रहं ग्रहोलास्तो त्रो पाकरणादि ब्रह्मा॰ देव॰ स
वे। अनुवा सिरा त्रिये लारा त्रिं जिन्वा ओ२ं स्तुत। यजमा॰ स्तुतस्य स्तु॰
अध्व॰ इउ आदेव हू॰ शो२ं सामो दइव ओ था॰ ओ२ं शो२ं सा॰ ओथा॰ वो। उक्थ

६९

वाचि। यज० शस्त्रस्यच० अध्व० अग्नयेपथिकृतऽइत्यादिशस्त्रं प्रतिगीर्यग्रहस्माद
न्तेचमसांश्चमसाध्वर्यवः आश्रा० अस्तु० उक्थ शा यजसोमानां वषट्कारा
नुवषट्कारयोर्हुत्वा। इन्द्रायेदं० अग्नयेस्विष्ट० चमसान्प्रक्षाल्य खरेनिदधा
ति। अयंतुविशेषः बाहुतः सद आरभ्य देवेभ्यस्त्वा दे० जुष्टमितिमैत्रावरुण
चमसेग्रहसंपातमवनयति। सर्वेषां प्रथमो मैत्रावरुणः सकृत्सकृद्भक्षय
ति। भक्षेहीत्यादिहृदयाभिमर्शनांतं नाप्यायनसादनेभवतः प्रतिप्रस्था
तोत्तराभ्यांप्रचरति। उप० सीन्द्रायत्वेतिग्रहं जाति। एषतेयोनिरिन्द्रायत्वेतिसा
दयति। पुनरर्हविरस्सीतिस्थालीममिमृशति ब्राह्मणाच्छं सीचमसमुख्यां
श्चमसानुन्नयति। CC-0. Mrugendra Vinod Collection. Digitized by eGangotri ...र्धं प्रमादेव सवित० सं०।

उशिगसिवसुभ्यस्त्वावसू॰ओ॰ स्तुत।यज॰स्तुतस्यस्तु॰प्रतिप्र॰इडादेवहू॰
शो॰ सामो॰ओथामो॰ओ॰शो॰ सा॰ओथा॰वो।उक्थ्यवाचि।यज॰शस्त्रस्य
श॰प्रतिप्र॰अग्नयेपथिकृतइत्यादि॰ओ॰अ॰उक्थशायजसोमानांहुताय
ज॰इंद्रायेदंअग्नये स्वि॰देवेभ्यस्त्वादेवा॰ब्जुष्टं ओसणा छं सिचमसेग्र
हसंपा तमवनयति।नप्रति प्रस्थाता भक्षयति सर्व भक्षा आप्यायनसा
दनेभवतः उपयामगृहीतो सीन्द्राय त्वेतिग्रहं गृह्णाति एषतेयोनिरिंद्रायत्वेति
सादयतितस्थाली प्रक्षालिमभिमृशति।अछावाक चमससमुख्यां श्चमसानुन्न
यति सर्वे राजानसुन्नयंतिरीरिक्वोदशाभिः कलशो मध्ये युक्तेति सम्प्रेष्य
तिउपावर्त्स्वध्वं ब्रह्मा देवसवित॰प्रकेतासिरुद्रेभ्यस्त्वा रुद्रा जिन्व।ओं
मा

स्तुत। यज०स्तुतस्य·प्रतिग्र·इडादेवहू·शो।ऽंसा·ओथा·ओंशोऽंसा·ओथामो·
वांउक्थंशाचि। यज·शस्त्रस्य·प्रतिग्र·अग्नयेपथिकृते इत्यादिश स्तं प्रतिगी
र्येग्रहमादत्तेचमसांश्चमसाध्व·आ·अ·उक्थशा। यजसोमानांहुतोइन्द्राय·
अ·स्वि·देवेभ्यस्त्वादेवा सुवं पणाजिमअग्निनर इत्यादि जमभगन्यूनत्रं इत्यं गंधर्वा
तंपूर्ववत् विश्वेदेवामरुत इन्द्रो अस्मा·मतो स्यामस्वाहा विश्वेभ्योदेवेभ्यो
मरुद्भ्य इन्द्राथेदं प्रशास्त्त: प्रसुवेतिसप्रेष्यतिस र्पते त्याह प्रशास्ता ध्रु
वादित्यस्थाल्या शेषव्यतिरेकेणनान्यः सोमो व्यतिरेचयितव्यः संति
ष्ठुतेमाध्यंदिनंसवनं। अथतृतीयसवनं आदित्यारंभणं तृतीयस
वनं तायते उपांश्वंतर्यामयोरादित्यस्यच पात्रे श्वमसैः कलशे ष्वपरि

१११ यति। यादित्याद्दृष्टि स्तया लाश्रीणामित्यादित्यग्रहं दुग्धापयसावाश्रीणा
तिनसादयति। आसमुद्रादांतरिक्षात्प्रजा० मरुतो वर्षयंतु इति केश्चिद्दर्भै
रादित्यं बिलेलक्षति। अहं परस्तादहमवस्तादहं ज्यो० मुत्तमः समानानां
इति तेर्दर्भैर्हस्तेनवापिदधाति। सूर्योमादेवोदेवेभ्यः पातु वायुरंत० मनते
भिः सोमनामभिर्विधेमते। इति ग्रहमादायोत्तिष्ठति। कविर्यज्ञस्यवितनोति
पं० अमुतः सनीआन्। इति ग्रहमुत्तरवेदिदेशं हरति। आदित्येभ्यः प्रियधा प्रियेभ्य
मभ्यः प्रियव्रतेभ्यो महस्वसरस्यपतिभ्य उरोरंतरिक्षस्याध्यक्षेभ्यो नब्रूहि।
संप्रेष्यति। आश्रा० अस्तु० यजमानो हूयमानमादित्यग्रहमन्वारभते अध्व०
आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्यपतिभ्य उरो १११

रंतरिक्षस्या ध्यक्षेभ्यः प्रेष्य संप्रेष्य तूर्ष्णीं दर्भेणाहवनीयमास्य यास्ते विश्वाः
समिधः संत्यग्ने॰ नायश्शमे स्वाहा इति ग्रहमनवेक्षमाणो वषट्कृते जुहोति।
आदित्येभ्य इदं॰ हुत्वा ग्रहमाहुतिं नान्वीक्षते नानुवषट्करोति न भक्षयति धा
राधे पात्रं सदेव दायतने सादयति होतृचमसे वसतीवरीभ्यो निःषिच्यानि
ग्राभ्याः करोति। निग्राभ्या स्थ देवश्रुतः शु वित्प्र न होतृचमसे यजमान
वाचयति अत ऊर्ध्वं वाग्यमनं प्रातः सवने तत्पादर्शनात् उभयोः सवनयो
र्जीवं उपरे न्युप्य यउपांशुपात्रं शुक्तमृजीषं पिसृज्य अस्मस्स्वा
त्वं देव सोम जा॰ धोऽपीहि। इति तन्नादाभ्यां शुमपिसृज्य यत्ते सोमादा
र्भ्यं॰ माय स्वाहा इत्युपांश्वे वोपांशु पात्रं वनावोपिसृज्य वसतीवरीभिरु

१२

पस्तज्यअवीव धामि स्रभिमंत्र्य दक्षिणेः पाणि भिग्रावभिर्यथार्थे राजा
नमभिषुत्सरसतिनिमित्ते अमास्का न्द्र स्ञ्च स्काग्रागपा गुदगितित्रि
भिरभिमंत्रणानुमंत्रणे करोतिनासतिनिमित्ते एवं विहृतं द्वितीयं
तृतीयंच राजा नेमभिषुत्य त्रिरभिषुतं द्रोणान्यापवनीयेसंसि
ञ्चति एवं विहितो द्वितीयस्तृतीयश्च पर्यायः उत्तमेभिषवे सुसंम
ते राजनि पवित्रेण अपी ज्यते दंते कृते उपरेग्रावाणः संमुखा कं
लातेभ्य सजीषंव्य पोह्य सजीषमुखा न्करोति नग्रावस्तुते सो
मोली षंप्रयछति न प्रतिप्रस्थाताग्रावणो नुमोदते। अत्रवासव
नीयानां निर्वापः नास्तु मा तस्या प्रतिप्रस्थाताग्रावं द्रोण

कलशं ग्रावसु व्यूह्य पवित्रं तत्र पवित्रवितानं करोति तेनैवाध्वर्युरभिमंत्र
यते धाराग्रहणकाले आग्रयणमेव गृह्णाति। ये देवा इत्यनुद्रुत्योपयाम० सि
वि० वेभ्यः चतसृभ्यो धाराभ्यो गृह्णाति उक्तास्तिस्रो धाराः आदित्यग्रहसं
पाताच्चतुर्थी विरमति धारा सोमः पवते इत्यादि पूर्ववत् प्रपीड्य पवित्रमित्या
दि पूतभृतमवनयति इत्यतं पूर्ववत्। यजमानः पत्नी चर्त्विजः पवित्रं पूतभृति
आशिरं अस्मे देवास इत्यवनयतः अस्मे देवासो वपुषे चिकित्सत य० आ
शीर्दाया दंपती० सपत्नीवीपीवर्येस्य० आशीर्मे उर्जे मुत० अन्या। स्भ
धरान्सपत्नान् इति चतसृभिः अध्व० उपयामगृहीतोऽसि प्रजापतये त्वे
ति द्रोणकलशमभिमृशेत् इदं यत्स्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इ

श्री॰



तिपूतभृतं। द्वौ द्वे पर्यो लसने विलो त्रयः कः कलशादिषट्। चतुर्दशैते मंत्राः स्यु
र्यथान्वारभ्य सर्पेति। द्वौ समुद्रो॰ यंत्यन्यं। द्रोणकलशा धवनीयो। द्वेऽध्य
सी॰ पूतभृतं। परिभूरग्निं॰ सर्वं सोमं। आत्मन इत्याग्रयणं विलोर्जेष्ठरमसीति द्रोण॰
समस्प्जनसस्तीत्या धवनीयं। विश्वेषां देवानां जठरमसीति पूतभृतं उपकलश इत्यादि
भिः षड्भिः यथा विनियोगः। को सिको नाम तस्सर्वे राजानं निःसर्पतः सम
न्वारभते अध्वर्युः प्रस्तोता तं प्रतिहर्ता तमुद्गाता तं ब्रह्मा च यजमानः य
स्ते द्रप्सः स्कंदति॰ यो द्रप्सो अंशुः॰ यस्ते द्रप्सो मधुमा॰ यस्ते द्रप्सः स्कं
दति यस्ते अंशुः परस्रुचो॰ सास्वाहा महाहविर्होता॰ व्यस्वाहा। उद
चः प्रह्वाः सर्पेति जागतः पथा दिव्या देवता वकेणा परिपरेण पथा स्वस्या



स्व

दित्यानश्चीयवागेग्रणाअ० इत्यध्वर्युः पूर्वौ बर्हिर्मुष्टिमीषदिव धून्वन्सर्पेतिउ
त्तरेण हविर्धानं गत्वा त्तरेणाग्नीध्रीयं धिष्ण्यं परीत्यां तरेण सदो हविर्धाने गत्वा
दक्षिणेन मार्जालीयं परेत्यांतरेण सदो हविर्धानं गत्वा पूर्वया द्वारा सदः प्र
विश्य दक्षिणेन ब्राह्मणाश्रमो दुंबरी च गत्वा यथायतनमुपविशंति आभ
कंपवमानेन स्तुवते। वायुर्हिंकर्तो ग्नि० दधाविति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छन्
स्तोत्रमुपाकरोति। प्रसर्जिसर्जिवागस्सर्ज्ये द्रं सहोस्सर्ज्युपावर्त्तध्वमभि
सर्पयजमाने तिउपाकरोति। यजमा० आयुर्वेहिंकुरुतस्येत्प्रस्तुतितस्यैमेव
रुध्येव्याहृतीयंचहोतारंत्वजपतिब्रह्मादेवसवित० प्रसवसुदीतिरस्या
दित्येभ्यस्त्वादित्यानिन्द्रओरं स्तुत यजमा० सचारिजगतीछंदाअ०

१२४

पास्येति आर्भवे पवमाने मध्यमस्तोत्रियाया मुद्गातारमन्वारभते स्तुतस्य
स्तुतम० यीणां। अध्वर्युः अग्नीद्ध हर्विस्तरणा हि पुरोडाशां१ अलंकुरु प्रति
प्रस्थातः पशो संवदस्वेति सं प्रेष्य ति। नात्र धिष्णिय विस्तरण व्याघारणे
हविर्धाने प्रविश्य। विष्णो त्वं नो अंतम० आक्षि त्वं ग्रहानुपतिष्ठते। तेनै
व पात्राणि संमृशति। आग्नीध्रः कर्मणे वां० संततमनुपृष्ठ्या बर्हिस्तरणाति
प्रतिप्रस्थाता सवनीयान्निर्वपति पयस्यावर्जं प्रातः सवनवत् अष्टाकपा
ले एकादशकपाल द्वादशकपालानां सवनेषु विकल्पः आग्नीध्रः पुरोडा
शानलंकरोति देवो वः सविता० देवस्त्वा सविता० त्रिः तस्मिन्कृते प्रतिप्र०
जुह्वां पंचगृहीतं गृहीत्वा पृषदाज्यं च ध्रुवां चादाय त्यादि हृदयशूलमन्ता

तं निदधातीत्यं तं कर्म करोति अध्वर्युः उपस्तरणादि इडा मार्जनांतमग्नी

षोमीयवत्करोति। अग्नयेश्छागस्य तिविशेषः यजमा० अग्नेरहं०न्येंद्रिया

वीजेमानमितिवा॥ स्विष्टकृदिडाभक्षणांतमग्नीषोमीयवत्करोति। भक्षेमाति

प्रस्थाता सप्तमः मार्जयित्वा सवनीयाना हरति। तानध्वर्युरासादयति। प्रियेण

ना० सीदंतु यजमा० योनः कनीय० स्यन्नो सि० योनः कनीय अयं यज्ञः पंच हो

ता अध्वर्युः जुहूपभृतोरुपस्तीर्य वदायाभिघार्य तृतीयस्य सवनस्येंद्रा

य पुरोडाशानामनुब्रूहि आ० अ० तृतीयस्य सवनस्येंद्राय पुरोडाशान्प्रस्थि

तान्प्रेष्य। यज० ईंद्रायेदं० इं प्रास्यात्हंदे० येंद्रियावीं न्नादो नादइंद्रियाव्य

न्नादो० अध्व० औपभृतं जुहां पर्यस्याग्नयेनुब्रूहि आश्रा० अ० अग्नयेमे

व्यस्कज-अग्नयस्-अग्नेरहंदे० यायुष्मा न्य अध्वर्युः प्राशित्रावदानादिक
रोति। आधवनीयं पूतभृत्स्यवनीयदशाभिः कलशं मष्टान्यु न्नाति। उन्नी
यमानेभ्यो नुब्रूहि होतुश्चमसमनून्नयध्वंतीत्रा २ आशीर्वतः कुरुध्वम
छावाकस्य चमसो ध्वर्यो पिलमुन्नयेत्यु न्नेतः सोमं प्रभावयेति संप्रेष्य
ति। पूतभृतश्च वोपस्तरणमभिघारणे करोति। उन्नीयमान सूक्ते परिक्षिते
होत चमसमध्वर्यु राद त्ते चमसा श्चमध्वर्यवः आ-अ-तृतीयस्य सेव
नस्य भुमतो विभुमतः प्रभुमतो वाजवतः सवितवतो नृहस्पतिवतो विश्व
देव्यावतस्तीत्रा २ आशीर्वतइंद्राय सोमा न्प्रस्थितान्प्रेष्य मध्यतः का
रिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृतान्जुहुत होत्रकाणां चम

साध्वर्यवः सकृत्सकृद्धुत्वा शुंतान्प्रदशीवेतोरभ्युन्नीयोपावर्त्तध्वमिति संप्रेष्य
ति। श्येनाय पत्वने स्वाहेति वषट्कृते ध्वर्युर्जुहोति। इतरे तूष्णीं जुहुति। इंद्रा
यनूसे जुहुति। इंद्राय सगुमतइ· अनुवषट्कृते तु वषट् स्व यमाभिगूर्त्तायन
मइति मध्यतः कारिणामेवचमसां जुहुति अग्नये स्विष्टकृत इदं· अध्वर्युः
प्रेतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातुः प्रयजमानस्य प्रसदस्यस्येति संप्रे
ष्यति। सदो भक्षान्हरंति। होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा पूत
भृत उन्नीयोपावर्त्तंते। तैरध्वर्युः प्रचरति मैत्रावरुणचमसमादाय आ·अ·प्र
शास्त्तर्यजे तिसंप्रेष्यति विश्वभाय घर्मणे स्वाहा वषट्कृते हुत्वानुवषट्
कृते वषट् स्व यमाभिगूर्त्ताय नमइति हुत्वा इंद्रावरुणाभ्यां मि· अग्नये स्वि·

११६ चमसाध्वर्यवेश्रयच्छतिसदोमसंहरति। आ॰अ॰ब्रह्मन्यज। पारिधेयेजनप्र
थनायस्वाहावषट्कृतेवट्स्वयम॰ मऽति अनुवषट्कृते हुत्वा इन्द्राबृहस्पति
भ्या॰ अग्नयेस्विष्ट॰ आ॰अ॰ पोतर्यज उर्जं होत्राणां स्वाहेतिवषट्कृतेव
ट्स्वयम॰ मऽत्स नुवषट्कृते मरुद्भ्य इदं॰ अग्नयेस्विष्ट॰ आ॰अ॰ नेष्टर्यज
वषट्कृतेपयसे होत्राणां स्वाहा। अनुवषट्कृतेवट्स्वयमभि॰ त्वष्ट्र इदं॰
य अग्नयेस्वि॰ आ॰अ॰ अच्छावाकस्यज। वषट्कृते प्रजापतये मनवेस्वाहा अ
नुवषट्कृतेवट्स्वयमभिगृ॰ मः। इन्द्राविष्णुभ्यामि॰ अग्नयेस्विष्टकृ॰ आ॰अ॰
अग्नीध्यज। वषट्कृते सतमृतपाः सुववीट्स्वाहा। अनुवषट्कृतेवट्स्व
यमभि॰ मः अग्नयेजातवेदस इदं। अग्नयेस्वि॰ तेपातां होत्रामघोर्घ्यतस्ये ११६

ति हुत्वानुमंत्रयेत। अयङ्ग्नी दिति होतुराख्यायनिरवदाय होतृ इडामादधा
ति। उपहूयमानामुपोद्यछं ते चमसा श्चमसाध्वर्यवः नेडा श्वकलमघ्रावा
कायनिदधाति प्राशितायां मार्जनं पिष्टलेपफलीकरण होमो प्रणीसु
मार्जनं उपवेषो दसनं कपालविमोचनं च क्रियते यथा चमसं चमसिनो
भक्षयंति होतृचमसं वषट्कारभक्षणानंतरं अध्वर्युस्तेनैवोपहूयप्र
तिभक्षयति। भक्षेहीत्यादि हृदयाभिमर्शनांतो भक्षः आदित्यवरुणस्येति
विशेषः। आप्यायनसादने भवतः सन्नेषु नाराशंसेषु तेषां व्याख्यातो
भक्षमंत्रः सर्वेषां प्रथमो होता सकृत्सकृद्भक्षयति द्विः स्वे चमसे पुनरभ्यु
न्नीताभ्यां अध्वर्युर्द्विर्भक्षितानां सकृत्सकृद्भक्षयति। तृतीयहोत्रकाअ

२९

ततःसशेषान्भक्षयित्वा आप्यायस्वेत्याप्याययंतितेनाराशंसाभवंतितान्
दक्षिणस्य हविर्धानस्य पश्चादक्षमुदगायता न्सादयंति सन्नेषुनाराशंसे
षु स्वस्व चमसमनुतस्य समीपेत्रीस्त्रीन्पुरोडाशशकलान्चमसाद्दक्षि
णतश्चमसेनउपास्यंतिब्राह्मणायजमानोध्वर्यादयः प्राचीनावीतानिकुर्वाज

आसनेतता

पंति। षड्ढोतारंचमसदेशेव्याख्यायदानप्रभृतौ अत्रायनौतान्पिंडपितृयज्ञ
मंत्रान्जपंति। एतत्तेततदेवदत्तशर्मन्येचत्वामनु·आपोदेवीःस्वधया·पितृन्
अत्रपितरोयथाभागंमंदध्वं·स्वाहोष्मणाव्यथिष्ठ्यै·अमीमदंतपितरोनु०
आंक्ष्वदेवदत्तशर्मन्एकैकस्मिन्सकृन्मीलित्वात्रिःअभ्यक्ष्वदेवदत्तश
र्मन्·एतानिवःपित·नमोवःपि·उर्जंवहंतीःस्वधया·उत्तिष्ठतपितरःप्रेत

पितरः० यं तु पितरो मनसा जवेन। मनो न्वाहुवामहे० जीवं व्रातं सचेमहि। अक्ष
न्नमीमदन्त० प्रजापते न त्व० इति जपति। अस्मिन् जपे यजमानस्य पितॄणामु
प लक्षणं कार्यं तस्मिन् कृते। वाममद्य सवितर्वामम्० वामभाजः स्याम। उपयाम०
सि देवाय त्वा सवित्रे। एतेनान्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति न
सादयत्युपनिष्क्रम्य। देवाय सवित्रेनुब्रूहि देवाय सवित्रे प्रेष्येति हुत्वा
देवाय सवित्र इदं० नानुवषट्करोति भक्षयति। सूदवत्पात्रं सादयति।
तेनैव पात्रेण उपयाम० तोसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमः एत
नैव पात्रेण वैश्वदेवं कलशाद्ध्रुववत् गृह्णाति। एष ते योनिर्विश्वेभ्यस्त्वा
देवेभ्य इति सादयि [illegible] यामो० ओं श्रा सा·

मो॰ ओया॰ वो॰ भ्रुकथ्यं वाचीद्राय। यजमानः शस्त्रस्य शस्त्र॰ अध्व॰ श स्त्रं प्रति
गी र्यग्र॰ ध्वर्यवः। आ॰ अ॰ उक्थशाय ज सोमस्य। तेन प्रचरति एकया च दश
भिश्च स्वभूत इ त्येत स्या शस्यमानायां प्रा तर्यु जो विमुच्येथामिति प्रतिप्र
स्थाता द्विदेवत्य पात्राणि विमुच्यापरया द्वारा पनिहृत्य मार्जालीये प्रक्षा
ल्य पूर्वया द्वारा प्रपाद्यायतनेषु सादयति प्र द्यावा यज्ञैः पृथिवी ऋता
वृधेत्येतस्यां शस्यमानायां अन्यतरतो न्यो ध्वर्युवः तेन प्रचरति। यथा
प्रातः सवने वैश्वदेवे। विश्वेभ्यो देवेभ्य इ॰ काव्येभ्यः पितृभ्य इदं अग्नये
स्विष्टकृ॰ अथ सौम्यस्य चरो स्तंत्रं सौम्यस्य पात्र संसादन प्रभृती ११८
ति कर्माणि प्रतिपद्यते॰ कर्मणेवां देवेभ्य॰ यतस्य संतति॰ यथार्थमोष

मुसलं

घपात्राणि प्रयुनक्ति स्फ्यं च स्रुस्थालीमेक्षणमग्निहोत्रहवणीं शूर्पं कृष्णाजि
नमुलूखलं शम्यौ ता प्रणयनं च यथार्थं प्रयुनक्ति पवित्रे कृत्वा प्रणीता प्रण
यनादि समानमानि र्वपणात्। निर्वपणकाले सोमाय जुष्टं नि० सोम हव्यं रं
स्व० सोमाय वो जुष्टं प्रो० त्रिष्फलीकरणांतं कृत्वा प्रणीताभ्यः स्थाल्यामा
नीय धृष्टिर० अपाग्ने० आदेवजं यं० ध्रुवासि० भगूणामं० स्वा स्त्वों स्वाघ
मोस्यावि० अतरितं० आग्निस्तत० अविदस्तत० नैकताय० पवित्रामंत्रेण। वि
सृज्य। सूर्ये ज्योति० तूष्णीमभिघारणं। आर्द्रः प्रथ० देवस्त्वा० प्रियेणना०
दनु। प्रजापतिर० अयं यज्ञः विस्रव्यं चतुर्होता व्याख्यातं पंचहोतारं। ध्रौवा
ज्यं चतुः पंचवारं गृहीत्वा दक्षिणातिक्रम्य आ० अ० घृतस्य यजेति संप्रेष्यति।

१५८

वषट्कृते जुहोति। अग्नय इ॰ दधिरसीत्यनुमंत्रणं अत्रैव तिष्ठन्। आप्यायतां॰
मा भेरित्यभिमृश्य सौम्यस्य हस्तेन पूर्वमवदाय मेक्षणेनोत्तरमवदायाभिघा
र्य। यदवदानानि। उद॰ निष्क्रम्य आ॰ अ॰ सौम्यस्य यज। वषट्कृते दक्षिणा
मुखास्तिष्ठन् दक्षिणार्धे जुहोति। सोमायेदं॰ सोमस्याहं वृत्रहा। पुनराप्या
य्या ज्यस्यावदाय दक्षिणातिक्रम्य आ॰ अ॰ घृतस्य यजेति संप्रेष्य वषट्कृ
ते जुहोति। विश्व इदं॰ दधिरसि। प्रत्याक्रम्य मेक्षणमनुप्रहृत्य संस्रावेणा
भिहृत्य स्रुचौ सादयित्वा। तं सौम्यं लौकिकेनाज्येनाभिपूर्य होतृभ्यो हरं
ति। तत्र यदि पूर्वं होता छंदोगेभ्यो निदृक्षेत् तस्मै प्रदाय तेन प्रत्तं छंदोगेभ्यो १५८
दद्यात्। प्रदाय सौम्यं प्रणीतासु मार्जयते उभयोश्चेत् विमोकः स्थाली

विमोचनंच क्रियते उपयोज्यमानीयते चनं कलायन्मेमनःपरागतंय॰ यामसी
तितस्मिन्नालानं परिपश्येत् अग्नी दग्नीन्विहर आग्नीध्रन्शलाके रादीप्ते
होत्रियादीन्धिष्ण्या न्व्या॰ वह्निरसीत्यादिद्वे धूरसीत्येतैः ततो ध्वर्युः नव
गृहीतमाज्यं गृहीत्वा ज्वलतो धिष्ण्यान्व्याघारयति। सम्राडसीत्यादि द्वे
गृहीतमाज्यं गृहीत्वा ज्वलतो धिष्ण्यान्व्याघारयति। सम्राडसीत्यादि द्वे
धूरसीत्येतैः शेषमाज्यस्य करोति नास्ति वषट्कारः न भक्षयति। धा
रय्यं धिष्ण्यान् आग्निमारुत स्तोत्र पर्यंत। उपया॰ सि बृहस्पतिसुत
स्य त इंदो इं॰ वे तं गृह्णामि। उपांशु पात्रे ण पत्नीवतमाग्रयण स्
स्य त इंदो इं॰ वे तं गृह्णामि। उपांशुपात्रेण पत्नीवतमाग्रयणस्
ह्णाति। तं धिष्ण्यं व्याघारण संपालेनाज्येन श्रीत्वा नस्याद स्य स्रुप निष्क्र
म्य आ॰ अ॰ अग्नी त्पाली वतस्य यजेति संप्रेष्यति। अग्ना ३ इ पत्नीवाः

सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा। वषट्कृते जुहोति अग्नये देवपत्नीभ्यस्त्व
ष्ट्र इदं॰ कृतो हुतो नुवषट्कारः अग्नीन्नेष्टुरुपस्थमासीदनेष्टः पत्नीमु
दानयोन्नेत्रा पत्नीसंख्यापयोन्नेहोंते तेचमसमुख्या श्चमसानुन्नय
होतचमसे ध्रुवायावकाशं कुरु सर्वराजानमु। न्नयमातिरीरिचो दशा
भिः कलशोमह्यान्यन्नेतिसंप्रेष्यति। नेष्टुर्धिष्ण्य आसीनआग्नीध्रा
ध्वर्युणोपहूय सेकद्भक्षयतितेनैवोपहूय प्रतिभक्षयेदध्वर्युः मार्जा
लीयपात्रं अक्षाल्यसादयति उन्नेता होतृचमसमुख्यांश्चमसानुन्न
यतिहोतृचमसे त्यमवनीयावकाशं करोति ध्रुवावनयनार्थं सर्वराजा
नमुन्नयति। सर्वसोमलिप्तं परिमृज्य न्युजाति अत्र नेष्टापत्नीमुदान

यति अपरयाद्धारासदः प्रपाद्योत्तरा धेपरिश्रितेस्थापयतिस्तुतशस्त्रेभ
वतः प्रज्वलायित्वा धिस्यानग्निष्टोमस्तोत्रमुपाकरोति। उपावर्त्तेध्वं अ
विस्वस्यनीवीरा विश्रति विना भी कुर्वाणाः सर्वेस्सकर्णप्रावृताभवंति। येस
दस्याः सतः सार्त्विजो यजमानश्चैत्येके वा। यजमा० भूर्भुवः स्वः महा ह
विर्होता। ब्रह्मा० देवस्य त्वा सवित० प्रसवे० ओजोसि पितृभ्य स्त्वा पितृन् जिन्व।
ओ३म् स्तुत। विश्वस्यते विश्वावतो वह्निया० रेतांसि धिषीय इत्युद्गा
त्रा पत्नीं संख्यापयति पत्नीं संख्यापयति। आगन्देवान्यज्ञो नि देवीर्दे
वे० यजमान आशिषः इति पत्नी दक्षिणमूरुं नग्नं कृत्य वक्षणामाविष्कृ
त्य स्वाहाकृताः समुद्रेष्टागं० निडई डिताः इत्यभ्यंतरमूरो रुदीचाउद

श्रीः

१८९

इमु खीपत्नीपन्ने जनीरूरुणो पअव नेयति। अ पूर्वयंतिसंख्यापनंप्रवर्त्तनं चात तीया
याः स्तोत्रियायाः क्रियते। यजमा॰ स्तुतस्यस्तु॰ इआदेवहू॰ अध्व॰ स्वादुष्किलायंम
धुमां उताय मित्येतस्यां शस्यमानायां मदामोदइवेति उभयते। मोदं शस्त्रं प्रतिग
णाति। मोदामोदइवशो॰ इसामोदइवेत्या व्याहावा दूध्वे व्याहावात्सिद्धः प्रति
गरः प्रत्तिप्रस्थाता भूतमसि भूतेमाधाः मुखमसि मुखं भूयासं। ध्रुवमभिमं त्रयते।
घावापृथिवीभ्यां त्वा परिगृह्णामि विश्वे॰ अन्वावर्तु ये। इति ध्रुवं स्थाना च्यावय
ति। दिविदेवान् दृंहां तरिक्षे वया इसी तिहरति। पृथिव्यां पार्थिवा ध्रुवं ध्रुवे॰
यथा॰ स्माकं केवली रसन्। इति होतृचमसे ध्रुवमवनयति। अध्वर्युः परि
धानीयायां शस्यमानायां मध्यमे वचने उक्थवाचीत्राय। यजमा॰ शैस्तस्य

१८९

शस्त्र॰ अध्वर्युः अग्नये पथिकृते इत्यादि शस्त्रं प्रतिगीर्य ग्रह होतृचमसमादत्ते च
मसांश्चमसाध्वर्यवः आ॰ अ॰ उक्थशा यजसोमानां वषट्कारानुवषट्का
रयोः सर्वांश्चमसान्सशेषाञ्जुह्वति। अग्नये वैश्वानराय मरुद्भ्यः अग्नये स्वि॰
होताध्वर्युः परस्परमुपहूय भक्षयतः होतृचमसमन्यांश्च अन्येषां चमसां
श्चमसिषूहूय होता भक्षयति। ततो होताध्वर्यो उपहूय समाख्या भक्षं भक्षय
ति। इतरे च चमसिनो होतर्युपहूय समाख्या भक्षं भक्षयति। एतदन्तोऽग्निष्टोमः।
चमसान्प्रक्षाल्य यथायतनं सादयति। यजमा॰ सुभूरसि श्रेष्ठो र[illegible]मीनां
प्रियो देवानां संराधनीयः तेला सूर्यो देवा अभिसंविशं त्विषासि सिनम्णो। त्वेषासि
सियहो सिव्रतो सिरवो सिचारणो सि ग्रु द्रोस्यायो सितस्यतस्पस्पलेष

१८२

स्य नम्णस्य यद्व स्यव्रतस्य स्व स्य वारणस्य शू द्रस्या येस्य मुक्षिम्बी यस्य यथा त्वंसू

भृक्षिषीय यथा त्वंसूयो सि विश्व दर्शतएवमहं विश्वदर्शतो भूयासं। इत्या दित्य

मुपतिष्ठते। अध्वर्युः अनूयाजार्थे उल्मुके अपिसृज्य अग्नी दी पयजानंगारा

नाहरेत्यादि पाशुकं कर्म प्रतिपद्यते। शामित्रादाग्नीध्रोंगारा नाहृत्योत्तरस्यां

श्रोण्यां बर्हिर्व्यूह्य निवपति। नानूयाजांते रवरुं जुहोति। नहृत्यं देश लेनचर

ति यद्यनूबंध्या भवति। यजमा० अग्नेरहमुज्जितिमनूज्जेषं। सोमस्याहं०

अग्नेरहं० वनस्पतेरहं० इंद्रस्य वसुमतोहमु० इंद्रस्य रुद्रवतोहं० इंद्रस्यादि

त्यवतस्सुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो वि

श्वदेव्यावतोहं० देवानामाज्यपानामहं० अग्नेः स्विष्टकृतोहं० इत्याशिषो जपति।

पोतद्रवाणां परिधीनामित्यत्र हरणं नास्ति पूपवत्स्तुत्रयसाधारण्यात्। अग्नी
षोमीयविकारपक्षे कार्श्मर्यमयानामनुप्रहरणमस्ति अनूबंध्यायामुभयेषामत्र
हरणं तत्र वसुभ्यस्त्वेत्यादि यजमानं प्रथते सतमावस्ते तेप्रहृतेषु संस्त्रावे
णाभिजुह्य हारियोजनेन चरति उन्नेता। उपया॰ सि हरिरसि हारियोजनो
हर्योः स्था॰ हरिवं तं गृह्णामि। उन्नेता द्रोणकलशे न हारियोजनं सर्वेमा
ग्रहणं गृह्णासि। ततो किंकीभिर्बह्वीभिः श्रीला परिमज्यन सादयंति शीर्षेन
धिनिधाये निष्क्रम्य इन्द्राय हरिवते नुब्रूहि आ॰ अ॰ इन्द्राय हरिवते प्रेष्या
हरी स्थ हर्योर्धानाः सहसोमा इन्द्राय स्वाहा मंत्रेण वषट्कृते जुहोति। तू
ष्णीमनुवषट्कृते हुत्वा सदो भक्षं हरति सर्वे सऋत्विजः सदस्या यजमान

१८३

श्वात्वा दश धाना इति विभज्य भक्षं उन्नेतर्युपह्वमिच्छाइत्युक्त्वा यजुर्थस्ते देव सो
मस्तुभस्य स्वत इन्द्रपीतस्य मधुमतः श्याम इष्टिश्चिद्भक्षाकारं धाना भक्षयंति।
संदश्य यासे भिंदंतो धाना निम्नानिकुर्वतः निरवध्यं यंतः आपूर्यो स्थामापू
रयत प्रजया च धनेन च बलं मेत रवेद्यां धाना निधाय व्यापवर्ग्येति रय्याखा
पोषाय त्वेति वा। दधिक्राव्णो अकारिषमित्याग्नीध्रागारे दधिद्रप्सान् भ
क्षयंति अत्राचमनमस्ति। एकसादिनानां चमसानां एकधनपरिशे
षान्यथा चमसं व्यासिच्य हारितवर्णा दूर्वाः संप्लोष्मातीत्रीक्त्सरस्सज
नयित्वा अप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुस्तोमभक्षयामीति र
समवध्रेण भक्षयित्वा चात्वाले वनयंति चमसनामेवेदं कर्म ततः सर्वे।

यन्म आत्मनो मिंदाभूद० पुनर० राघत्तमह्योः इति मिंदाया हवनीयमुपति ष्ठते। देवकृतस्यैनसोवयजनमसि स्वाहेति सप्तभिर्मंत्रैः प्रतिमंत्रं आहव नीयेश्चकलान्यभ्यादधाति। देवकृतस्यैन० मसि स्वाहा। मनुष्यकृत० पि तृकृत० अन्यकृत० परकृतस्यै० एनस एन० सोवयजनमसि स्वाहा यच्चाहमेनो विद्वांश्चकार यच्चाविद्वां० स्तस्यैनसोवयजनमसि स्वाहेति। ततः सर्वे उभा कवी युवाना सत्यादाधर्मणस्पती सत्यस्य धर्मणस्पती विसख्यानि सृजा महे। इति मंडलीकृता हस्ताना सज्यब हिर्वेदि सर्वेता नूनाग्निणः सख्या नि विसृजंते। वेदोसि वित्तिरसि० अभिमृश्य वेदं पत्नीः संयाजयंति। नास्ति योक्त्रविमोकः अयोक्त्रैरेवांजलौ पूर्णपात्रानयनं सोमस्य फलीकरणं तु

मः। सारस्वतादिनारिष्टहोमाः पुरस्तात्स्विष्टकृतइत्येतस्मिन्पक्षेसवनी
यानामंगयागस्यचावर्त्तते। नपार्वणहोमो सर्वप्रायश्चित्तानिहुत्वा ध्रुवा
माप्याय्यस्तीर्णवेदेनवगृहीतमाज्यमध्वर्युर्ध्रुवयाजुहोति। धातारा
तिः स० धात्रादिभ्यइदं० समिंद्रणोमनसानेषि० संवर्चसा पयसा सं० यद
घ्वाप्र स० ४ स्वगावोदेवाः स० ५ यानाव हउशतो० ६ यज्ञयज्ञंगच्छ० ७
एषतेयज्ञोयज्ञपते० ८ देवागातुविदो० ९ इतिनवर्हिरनुप्रहरति। अग्ने
दब्धायो इत्यादि। अग्निनादेवेनपृतनाजयामीत्यादि पूर्वजातेभ्यादि
द्विष्मो विष्णोः क्रमेणात्येनाक्रामामीसंतइंद्रेण देवेनपृतनाजयामि
त्रैष्टुभेनछंदसापं० रहृ० वज्रेण सहृजा० भ्रातृव्यानधारान्पाद०स्ते

रन्नायेदं १ धेष्टइदं ३ अग्नय [illegible] विष्णवेदेवायेदं [illegible] यज्ञायेदं यज्ञपतयइं० देवागातु०

नाक्रामामास्यंतं। विष्णुभिर्देवेभिः २ तमाक्रामिजा० सं०ग्राम० रेण वज्रेणापरजा
आत व्यानधारान्याद० णा सो नाक्रामामीत्यंतं। ततो यजमानो विष्णुक्रमानाक्रामते।
विष्णोः क्रमोस्यभिमातिहेत्यादि हृदयशूलचरणात्प्राक् पशुवत् उभयोर्यज्ञ वि
मोकः यां घर्मे स्थालीमिति सोमस्य नास्ति व्रत विसर्गः सत्यामनूबंध्यायां हृद
यशूलचर्या यूपोपस्थानं येन स्तः अस्ति ब्रह्मयजमानभागप्राशनं अस्ति
ब्रह्मसमित्। दृष्टिरसि। उभौ यथेतं प्रतिनिक्रम्याग्रेणाहवनीयं परीत्य दक्षि
णात उपविशतः ब्राह्मणतर्पणं। उपसृजं धरुणं मात्रे मातरं धरुणो धयन्।
रायस्पोषमिषमूर्जमस्मासु दीधरत्। उदुत्यं जातवेदसं० चित्रं देवाना० ब्र
ह्मसमिदाधानांतं समानं। हृदयशूलेन चरंति हुत्वा॥ शुगासितमभिज्ञो०

दिव्मः धाम्नो धाम्नोराजन्नि·मुंच । सुमित्र्यानआप·दिव्मः । आशासानः सुवीर्यं
ंरा·नायतिष्ठ । अग्निंनरोदीधितिभिररण्योरित्यादिप्रायश्चित्तानिजुहो
तिब्रह्मन्सोमेत्यादिप्रायश्चित्तानिभवंति । पितृन्जनमगन्य ह्वस्त·राम्नछर्द
दंवतीय२सवनंकवीनाम·वसीयोनयंतुस्वाहा प्रशास्तः प्रसुवेतिसंप्रेष्य
तिसर्पतेत्याहप्रशास्ता ॥ ॥संतिष्ठते तृतीयसवनं ॥ सुत्येहनि अवभृथस्या
संभवेअत्रपत्नीयजमानौदेक्षंव्रतंव्रतयतः ॥ ॥पुरस्यरम्स्वेति ॥ ॥अथाव
भृथस्यतंत्रप्रक्रमः तत्रश्लोकः अग्न्यादि धानात्रितयं क्रमाणांमभिक्र
माद्याचरणंव्रतानांउपस्थितिर्ब्रह्मसमिन्मखस्यवित्तादिपश्चात्सवनाहुतिः
स्यात् श्रीअवभृथस्यतंत्रप्रक्रमयतिअग्नीन्वादधातिममाग्नेवर्चः अद्ययज्ञायेइमामूर्जं

तु

यथातिथिआवभृथ ॐहविः नास्तिव्रतंपरिभोजनीयांसा हृत्यवेदं। परिस्तीर्येन।
भावग्नीकर्मणेवां यज्ञस्य सदनेपात्राणिस्पर्थंकपालं अग्निहोत्रहवणीशूर्प
कृष्णाजिनं शम्यामुलूखलमुसलं दृषदमुपलांस्रुवंजुहूमुपभृतंध्रुवांआ
ज्यस्थालीकुटरुंपात्रींमेक्षणंवेदंमदंतीस्थालींवदाग्रा।णिनिर्वपणस्था
लीप्रयुज्य। नब्रह्मवरणंवाचस्पतइत्यादिब्रह्मणः पवित्रेकृत्वा यजमान
वाचंयच्छवाग्यतः संविशंतो। यज॰ करत्वा॰ अध्वर्युः दक्षायेत्यादिमदं
तीरधिश्रयतीत्यंतं। निर्वपणकालेवरुण। यजुष्टं नि॰ वरुणहव्यंॐर
रक्षस्व। वरुणायवोजुष्टं प्रो॰ कपालोपधानकाले ध्रुवंध्रुवस्थिरसि॰ अपा
चे आदेवयजं॰ ध्रुवमसि भृगूणामंगि॰ करत्वा। पिष्टानससमोप्योसृय

यजुरुक्तानाभिरद्भिः संयोति अभिवासित आप्यलेपं निनीय। संप्रेष्यति प्रोक्ष
णीरासादय स्रुवं च स्रुचश्च संमृड्ढ्या ज्यं नो देहीति। ततः शतभृष्टिरित्यादि
आग्नीध्रः प्राशित्रवजें संमार्ष्टि नमूली संनहनं अग्ने गृहपतइत्यादि पूर्वा तेवि
तं विष्युषित्यादि यजुषे यजुषे भवेत्संतं समानं। अध्वर्युः आज्यमसीत्यादि
प्रतिहृत्य गार्हपत्य समीप आज्यानिगृह्णाति स्रुवोणि चतुर्गृहीतानि पंचगृही
तानि वा। ब्रह्मणस्त्वेति चतुर्भिरुपभृति पवित्रे आपिस्टज्या इदमहं सूर्य ज्यो
ति। आप्यायतां घृ० सा वरुणा यजुष्टमाभि० अभिपूरणं न विद्यते। अलंकृत्य
पुरोडाशं उत्तरे से अवभृथं संसादयाति। पुरोडाशमाज्यान्योदुंबरी मधि
षवण फलके खरपांसू नजीषं यत्किंचित्सोम लिप्तं ग्रावाउदंचनं कलशा

न्त्वमसान्परिप्लुवां ऊर्ध्वपात्राणि एकधन स्थालीः एवंजातीयकं अन्यत्र चत
सभ्यस्थालीभ्यः दर्विका हविषामाज्य पृक्षेस्थालीनां मिह सादनं मैत्रावरुण
दंडं वा सादयति। यजमान उपसृजन्धरुणं मात्रे मातरं धरुणो धयन्। राय
स्पोषमिषमूर्जमस्मासु दीधरदिति उपनिष्क्रामन् जो दुवरी मारिखदति।
अवतेहेडो वरुण० कृतानि। इति कृत्वा जिन मुन्मुच्य चात्वाले प्रास्यति अथवा
स्थापयित्वा अग्रे वक्ष्यमाणमार्जनानंतरं। इंद्राय ज्येष्ठाय श्रेष्ठाय यमा
योपमित्यभिप्रुक्ष्य निदधाति। उदुत्यं चित्रं मिति द्वाभ्यामादित्यमुपतिष्ठते
यद्यस्तमितः स्यादाहवनीयमेवादित्योपस्थानेनोपतिष्ठते। अध्वर्युः संस्था
प्यावभृथं। आयुर्दा अग्ने हवि० तादिमः स्वाहा। स्रुवेणा जरंसे शालामु

रत्विग्वा जुहोति। आयुर्दा अग्न इत्येतं। आसन्निष्ठवन्मथेषु प्रस्तोतः सामानि गायेति
संप्रेष्यति। पत्न्या सह सर्व ऋत्विजो यजमानश्च साम्नो निधनमुपयंति। उरुं हि
राजा वरुणः। विधं श्चित्। चालालं प्राप्य सर्वे सपत्नीका वदंति अंतरेण चात्वा
लोत्करावुदंचो निष्क्रामंति। अध्वनो धर्मे शो द्वितीयं साम्नो निधनमुपयंति
प्रस्तोतः साम्ना निगायेति संप्रेष्यति पूर्ववत्सर्वे। शतं ते राजन्भिषजः गव्य
स्मत्। अपो दृष्ट्वाध्वर्युर्जपति। अभिष्ठितो वरुणस्य पाश इत्युदकांत
मभितिष्ठंति तत्र्यैमुदकांते। अभिप्रगाह्य प्राङ्मुखास्तिष्ठंतो वभृथेन चरंति।
दक्षिणतोध्वर्युर्ब्रह्मयजमानाः उत्तरत आग्नीध्रः पश्चाद्धोता मध्ये आसं
द्यामजीषादीनि हविराज्यस्रुगादीनि स्थापयित्वा तिष्ठंतो वभृथेन प्रचरंति।

आहवनीयदेशे अप्लुतं प्रास्यत स्मिन्यजति ओ क्र स्रुदेवता स्रुवे देनो पवाज
यति स्रुवाघारमाघार्य ध्रुवामाप्याय्य अग्नीदुदकं त्रिः स्त्रिः समद्दि संप्रेष्य
ति। आग्नीध्रः उदक्कवाज जिह्वा जंत्वा सरिष्यद्वाजं क्षेष्यद्वाजिवाज जिद्वाजजि
त्यायेसंमार्ज्य्युदकमन्त्रा दमन्त्राद्याय अग्नीद्दर्भान्स्फ्य उपसंगृह्य संमार्गः
सम्र थानमो देवभ्यइत्संजलिंक हाजुहेत्य · उपभदे · स्रुयमेमे · अग्ना विस्रू
नास्ति अस्तिविसोः स्थानमसि · अग्ने रनीकमुप आवि · च्चुरण्ये स्वाहा। स्रु
च्यमाघारयति। अग्नयइद · नास्त्यनुमंत्रणं। ब्रह्मा: दक्षिणातिक्रमणमे
त्याक्रमणंचन स्तः ध्रुवा समंजना दिसंमार्गतृणानि स्फ्य उप संगृह्य क
रेदमध्वर्युः आ · अ · तिष्ठ होतः सीद मादेवेष्विति सेव जपः अध्व · अपब

१८८ हिषः प्रयाजान्नुजान्यजति नोपभृतं समानयेत आ॰ अ॰ समिधो यज यजेतित्रिः
यज॰ समिध्र्यइ॰ वसंतम॰ तनूनपातइ॰ ग्रीष्मम॰ इड्ढइ॰ वर्षा स॰ अग्नये सो
मायवरुणादेवेभ्य आज्यपेभ्योग्नये स्विष्टकृत इ॰ हेमंत शिशि॰ अध्व॰ प्रया
जशेषेण ध्रुवां पुरोडाशमुपभृत चाभिघार्य अग्न्यु मं तावाज्यभागौ व्याख्या
तेपं चहोतारि पुरोडाशादवदाय वरुणं यजति। यजमा॰ वरुणायेदं॰ वरुण
स्याहं॰ भूमानं प्रतिष्ठां गमेय। द्यावापृथिवी यविकारत्वात् ततो नारिष्ठहो
मः कृत्स्नं पुरोडाशमवदाय अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि अ
ग्नीवरुणौ स्विष्टकृतौ॰ अग्नीवरुणाभ्यां स्वि॰ अग्नीवरुणयोः स्वि॰ यायुष्मा
न्य॰ अग्निमी॰ वैश्वानरह॰ इति विद्यते अनुदके सकृत् सकृत् संमार्ष्टि। उद

त्वासस्व हृजं

वाज जिह्वाजँजिगिवद्धाजिवा॰न्नाघ्राय। यो भूतानामाधिपती॰ रुद्रायतंतिच

राये॰ संमार्गीन ख्व वदधाति। नास्ति वेदिर्व हि॰ अपवर्हि पावनूयाजो यज

ति। औपभृतं जुह्वामानीय। आ॰अ॰ देवौ यज यज देवाय नराशं॰ सस्या

हं॰प शुमा॰आ॰अ॰यज॰यजमा॰अग्ने॰ स्विष्ट॰ महाह विर्होता एतावक्रि

यते। आसं घ्राम जीवं चर्मणि न्युप्य निदधाति। औदुंबर शारवयास्त्रुक्स्था

नीयया दध्न जीव मभिजुहोति। यत्ते ग्राव्णा चिच्छिदुः सोमरा॰ क्षयेम स्वा

हा। से। माय राज्ञ इदं॰ यत्ते ग्रावा बाहुच्युतो अचु॰ देव सोम स्वाहा। सोमाय

राय त्ते त्वचं बिभिदुर्य॰ व्योमन् स्वाहा। सोम॰ यरा॰ अस्य शरीरं प॰ विश्व

रूपे स्वाहा। सो। मा यरा॰ [illegible] [illegible] सुपूतं यवा। समुद्रं ते हृ

द्यमप्स्वंत॰ नमोवाके विधेमस्वाहा अङ्ग्र्इदं। अप्सु सजीबं विसृजति। अ
प्सु धौतस्य सोमदेवतेन्द्राभिः सु॰ तो भक्षया मि। सो भिदूनामुच्चं रतित मवघ्रेण
भक्षयत्सु पस्पृशतिवा। अवभृथनिचंकुण निचेरुरु॰ देव रिषस्याहि। अवभृ
थद्रव्याणि सहो दुंबर्याप्सु प्रविध्यंति अनियतत्वा द्धुवः कर्त्तारः सर्वेषां
मंत्राः देवीरास एषवो भूगिस्तब॰ सुकृतो ब्रूतात। सर्वे उपतिष्ठंते। सुमित्रान
आपओषधय॰ द्विष्मः। इतिस वेमार्जयंते। ज्येष्ठाय श्रेष्ठायत्सनेन
यदि पूर्वकृष्णाजिनं नन्यस्तं विसृजेत आदित्योपस्थानं च। सुमित्रान
आ॰ द्विष्मा इति जपतः अभिप्रगाहानुपपक्षंतो सशिरस्कौ स्नातः अ
न्योन्यस्य पृष्ठे प्रक्षालयतः प्रतीनमा भूवन्मानोगा हृते विते मुंचामिरश

नाविरश्मी॰ देवतासु। इतियजमानोमेखलांविस्रंसयते। इमंविष्यामिवरुण
स्यपाशमितिपत्नीयोक्रपाशंविसृजते। उभौदंपतीमेखलायोक्रंजालंदी
क्षितवसनेचाप्सुप्रास्यसोमोपहननंवासोयजमानउदकएवतिष्ठन्वास
सीदेहि। परिधत्तेपत्नीसोमपरिश्रयणीपरिधत्ते। तावहतवाससौभवतः
तेउदवसानीयायामध्वर्युवेदत्तः अहतवाससौभूत्वाबहिर्जलमाचम्य
तज्जलंपुनःप्रविशतः। अध्वर्युःउन्नेतर्वसीयोनउन्नयाप्सुदुत्येमधुम
त्तमागिरस्तोमासईरते। सत्राजितोधनसाअक्षितोतयोवाजयंतोरथाइ
व। कण्वाइवभृगवःसूर्याइवविश्वमिद्धीतमानशुः इत्युन्नेतारंसंप्रेष्यति
उन्नेता। उदेतप्रजामुतवेचोदधानायुष्माकंरायउतयज्ञाअस्यक्षतगाय

त्र्यंबकंदोनु सं॰ रभ ध्वम थास्याम सुरभयोगः हेष्ठु। इत्युन्नेताहोतः प्रथमा न्यज
मान प्रथमान्वो न्नयति निष्क्रामयति। स्नानांते सर्वे कुर्वंति। अतिष्ठुतो वरुणस्य
पाशः इत्युस्नांतं प्रतियोति। प्रत्यस्तो वरुण स्य पाशः इत्युत्क्रांतं प्रत्यस्यं
तः औदुंबरी समिधो धारयंतः अपामसोम ममृता अभू॰ म्नतम स्वस्य। इत्युन्ने
तारं पुरस्कृत्य अप्रतीक्षमायंति। एधोस्येधिषीमहि। समिदसि। तेजोसि ते
जोमयि धेहि। इत्याहवनीये समिधोभ्यादधाति। अपो अन्वचारिषम् इत्युप
तिष्ठते। एवं पत्नी गार्हपत्ये भ्याधायोपतिष्ठते। यजमानः अपरेण शालामु
खीयमुपस्थ आधाय। मयी दमिंद्रियं ज्येष्ठ्यं श्रैष्ठ्यं दधातु स्वाहेति शाला

मुखीये जुहोति हुत्वा कर्मा जिन॥ ॥सभिष्टत्रभ्रथः॥ ॥अथोदयर्नीया॥ 

प्राग्वंशउदयनीयायास्तंत्रंप्रक्रमयतितस्याः प्रायणीयायाकल्पोव्याख्या
तः ममाग्नेवर्चः अद्ययस्तायस्मामूर्जे यथातिथि औदयनीय २ हविः २ धमा
बर्हिराहरक्तिबर्हिषांव्रतं मन्त्रविधुदितिनाविद्यते यद्युदवसानीयांते वृष्टि
रसीत्येतस्यपाठोस्तिन वेदस्ति। सप्तदश सा मिधेन्यः ततस्तांत्रयोवि २
शतिधा। वेदं। परिस्त्री यनोभावग्नौकर्मणेवा यज्ञस्य सदनेपात्राणिस्फ्य
प्रायणीयस्थालीसनिष्का सा मेक्षण अग्निहोत्रहवणी शूर्प कृष्णाजिन
मुलूखलमुसलं स्रुवं जुहूमुपभृतं ध्रुवां आज्यस्थालीपात्रीवेदं प्रणीतां
२ अपात्रंचप्रयुनक्ति। कस्त्वा युनक्ति सत्वा युनक्ति कस्मै त्वा युनक्ति तस्मै
त्वा युनक्ति पोषाय त्वा ... देवस्त्वा सविता। पयो देवा

१९१

ग्वेपूर्येग्वग्रउस्मंयस्तंनयाग्नेयस्तपतिंधेहित्वामिंद्रोवृणीतवृत्रतूर्येत्वामिंद्रम
वृणीथावृत्रतूर्येप्रोक्षितमसि।ब्रह्मन्वयःप्रणेष्यामि।कस्त्वाप्रण०य
जमानेन्त्वंचतंदेवागातुविदोगातुं।व०ज्यतामितिपयःप्रणयति।भूश्चे
त्यविकृतंयाजमानं।ब्रह्मपूतमसिकस्त्वायु०निर्वपणकालेअदित्यैजु
ष्टंनि०आग्नेयविकारःआदित्यैवोजुष्टंप्रोक्षा०प्रक्षालनंनिनीयस्था
लीमुपदधाति।घृष्टिर०अपाग्नेआदेवयं०ध्रुवासि।पात्रांतरेतंउ
लान्समोप्यप्रणीताभ्यःपयआनीयसवपनेमुत्सवनंचकृत्वाघर्मो
स्यविश्वायुषःस्थास्त्याःसमोप्यांतरितं०अग्निस्तेअविदहंत०आ
प्यभ्योनिनीयवेदिंकृत्वासंमार्ष्टिप्रोक्षणीरासादयेतिप्रकृतिवत्संप्रे १९१

र्य

ष्यति प्रकृतिर्हि आज्यानि गृह्णाति। आप्यायतां घ्रु॰ सादित्येजुष्टम॰ आज्ञेभु
वन॰ स्थाल्यैवोद्वासयेत्॰ देव स्वास॰ सूर्यते चक्षुः॰ पृथिवीं॰ शरीरैः इत्या
सादयति। यजमा॰ यज्ञोसि॰ अयंयज्ञः विहव्यं चतुर्होता। अध्वर्यु॰ अयंवे
दादिकृत्वा द्वितीयाज्यभागांते कृते पत्न्या पंचहोतरि व्याख्याते ध्रौवाज्या
ज्जुह्वां चतुर्गृहीतं गृहीत्वा अग्निं दक्षिणतो यजति सोमं पश्चात्सवितार
मुत्तरतः पथ्यां स्वस्तिं पुरस्तात् अदितिं मध्ये हविषा यजाति। याज
मानं लिंगोक्ता देवताः चतुर्णां दध्निरसि॰ अदिते रहंदे॰ प्रजनिषीय
प्रजया च पशुभिश्च। मरुतो यद्धवो॰ उपगंतने त्यध्वर्यो रनुवचनं
भाष्यकारो क्तं द्रष्टव्यं॰ स्विष्टकृतः पूर्वनारिष्ठ होमः ततः स्विष्ट

१८२

कृतंमेक्षणंतदंते प्रस्तरस्य संस्त्रावेणाभिजुहोति पत्नी यजमानौ अन्येवास
सीपरिधाय पूर्वपरिहितेध्वर्यवे ददतः यो ऋविमो कः समिष्टयजुर
थास्तिनबर्हिरनुप्रहरणं। मो षायत्वा। यस्त्वायोक्ष्मीत्सत्वाविमुंचतु।
अस्ति व्रतविसर्गः। समुद्रंत्वा॰ निमपिगच्छ। नवृष्टिरसीतियद्युदवसानी
यांतेअस्तिनचेदुदवसानीयायांतर्हि त्रास्ति वृष्टिरसीतिनचेदस्ति। अ
न्यत्सर्वंदर्शपूर्णमासवत्कृत्स्नं संतिष्ठते॥ ॥अथाप्रयाजपक्षे प्रयोगः॥
प्रस्तरस्याहरणंनास्तिनालुभितः नजुहोमाज्यं गृह्णाति उपभृत्सपिंड
स्रणस्त्रुवमादिभिर्ग्रहणं सादनकालेतूष्णीं जुहूमासादयति एते असदंता सकृत
स्य लोकते विष्णो पा॰ विस्तना स्थो वे देव धामनो प्रजापत्यस्य इत्यभिमं
त्रणयोः समानानां आघारकाले तूष्णीं ध्रुवायास कृद् गृहीता तूष्णीमेव यथायतनं

सादयित्वाभुवनमसीत्येवमादि प्रतिपद्यजुहोतिःसमनन्तीत्येतदंतं
करोति उन्नीतं सुवीरायेयज्ञेनेतिन विद्यते आज्यभागादिकर्म प्र
तिपद्यते संज्ञानाथाभि त्येवमादिआसंवदस्वेत्येतदंतं न विद्यते। समा
नमन्यत्। अनूबंध्यायास्तंत्रं प्रक्रमयति। ओत्तरवेदिकंशालामुखी
यं दक्षिणाग्निं चोत्वादधाति। ममाग्नेव०अद्ययज्ञायइमामूर्जे यथा
ति थिमैत्रावरुणीय स्हविः शाखाहरणंवत्सापाकरणयोर्विधिः इ
षेत्वेति शाखामाछिन त्यूर्जेत्वेति शाखामाछिन त्यूर्जेत्वेति सनमय
त्यनुमार्ष्टि वा। इमां प्राचीमु० पाम हमित्याहरति वायवस्थो पाय
वस्थेति षड्वत्सान्तूष्णीं त्रिरपाकरोति अपाकृतानामेकं वत्सं शाख

१२५
१९३

चोपस्पृशति। देवो वः सविताप्रा० माघशंसइतिगोचरमभिमातृः प्र
स्थापयति प्रस्थितानामेकांशाखयोपस्पृशति। शुंध्वा अपः सुप्र० तं
मित्रावरुणाभ्यां शरदो दुह्रा० णं किंतिप्रस्थिता अनुमंत्रयते। ध्रुवा
अस्मि० ह्रीरितियजमानस्य गृहानभिपर्यावर्त्तते। यजमानस्य प०
हीत्यग्निष्ठेनस्यग्न्यगारे वा पुरस्तात्प्रतीचीं शाखामुपगूहति। वत्सापा
करणं व्रतं० इध्ममाहरति सप्तदशास्यामिधेन्यः। शाखापवित्रं अंत
र्वेदिशाखायाः पलाशानि प्रशात्य सर्वाणि मूलतः परिवास्य उप
वेषोसीतितमुपवेषं करोतितस्यां त्रिवृद्दर्भमयं पवित्रं सविदलं करो
ति। त्रिवृत्सलाशे० रोतुमइति मूले मूलमुपसृजत्यग्रे ग्रं नग्रं थिं करो

१२५
१९३

तिवसूनां पवित्र० पवित्रं करोति परिस्तरणं नो मावग्नी कर्मणे वां यज्ञस्य
सदने पात्राणि स्पंधेन सहदो हस्थालीं आज्यपात्राणि च अस्तुनक्ति।
न ब्रह्म वरणं वा चस्पत इत्यादि। पवित्रे कृत्वा यजमानवाचंयच्छ संविशं
तं० कस्त्वा० ब्रह्मन्नोक्षिष्यामि। शुंधध्वं एता आचरंति मातर्दी इंदो हय
तितस्य प्रसवा पात्राणि शुंधतेति संप्रे क्ष्यति प्रोक्षणी: संस्कृत्य सर्वा
णि पात्राणि प्रोक्षति। एता आचरंतिम० इहवो मित्रावरुणो रमयतां गा
व: इति गा आयती: प्रतीक्षते० धष्टिरसि० उपवेषमादाय निरूढं ज
न्यं० गार्हपत्यादुदीचोंगारान्निरूह्य मातरिश्वन इति तेषु कुंभीमधिश्रि
त्य भृगूणामंगिरसां० स्वेत्यत्नापरिधाय उपस्पृष्टो मे भूतादिति

श्रीः

१९५

संप्रेष्यति वत्सूनांप० स्त्रधारमिस्ति कुंभ्यां प्रागग्रं शाखापवित्रमादध्यात्पन्चारभ्य
वाचंयच्छति धारयन्नास्ते दिते रास्नासीत्यभिधानीमादत्ते पूषासीति वत्समु
पसृजति। विहारं गां चोपसृष्टामंतरेणमासंचारिष्टेति संप्रेष्यति। अय
क्ष्मावः प्रजया० वंतीरित्युपसृष्टां। ऊर्जं पयः पिन्वदेयमित्युपसन्नां। द्यौश्चे
मं यज्ञं० धाविति दुह्यमानां। उत्सं दुहंति० लेद धाविति धारा घोषमनुमंत्र
यते दुग्ध्वा हरति तं पृच्छति कामधुक्षः प्र० हि मित्रावरुणाभ्यां हविरिंद्रि
यं० गं गां यस्यां देवा० हितमिति गां धुगान्वष्टे। सा विश्वायुरिति प्रत्युच्य दे
श्च कर्मेति तृतीयां तिस्त्रो दोहयित्वा वहुदुग्धि मित्रावरुणाभ्यां देवेभ्यो०

१९६

कल्पतामिति त्रिः संप्रेष्यति विसृष्टवागनन्वारभ्यो त्तरा दोहयति तूष्णीं वा हुतस्तोकोहुतोद्रप्स॰ वीभ्य। मिति विप्रुषोऽनुमंत्रयते। द्यौश्चेमं यज्ञमिति सन्नाय्यं दोहनं संक्षाल्य्य संप्रच्य ध्वमिति कुंभ्यामानयति अपायित्वा तूष्णीं केन सर्पिषाभिघार्य ॥ इति सिद्धांतः तस्मिन्पक्षे खंडे ष्टि समाख्याता देविकाः पृथु कर्त्तव्याः। अन्वाधानादि ब्राह्मणतर्पणांत एतिकर्त्तव्यतयेत्येतन्निदर्शनं हविराहुती प्रभृति पुरोडाश वज्ञ स्वं गौ पजौ विन्यायेन पृथक्तया नस्येति कर्त्तव्यतया देविकाः कर्त्तव्याः इत्यपरं दर्शनं। आपस्तंब स्तु तामनु देविका हवींषि निर्वपति। समानं तु स्विष्टकृद्धिडा मित्याह। तस्यामिक्ष्या समान तंत्रत्वं हविराहुति प्रभृतिस्विमिडांतत्वं च पक्षः। समानतंत्रपक्षे

प्रयोगः ममाग्ने अद्य यज्ञाय इमामूर्जे यथातिथि· ऐल्ट ९ हविः पूर्वमेवोपाकृताव
त्साः आहृता च शाखा उपते चक्रेता परिभोजनीयामाहृत्य विंशतिदारुमिध्मं
सान्नह्यति ततस्त्वा वि९ ज्ञातिधा· त्रीन्परिधीन्यत्ता· न संभारा· तावेदं करोति
पूर्वोक्तमुपवेषं शाखापवित्रं च यदि न हरेत् धारणाभावात् पूर्वत्र न क्रिये
रन्· वत्सा इहेव यथा शाखाहरणं· शाखाहरणं वत्सापाकरणमुपवेषं
पवित्रं चकृत्वाग्नीन्परिस्तरणाति। नोभाव ग्नीकर्मणे वायमस्य सदने
यथार्थे पात्राणि प्रयुनक्ति· अन्यान्ये धिपात्राणि आज्यपात्राणि
आज्यस्थाली कुटरु मि ऊ आपात्रं प्रातर्दोहपात्राण्या मिक्षावाजि
नपात्रं च मती दरुस्थाली यो रुं वे पा याणि व न स्पताद्रिणः पवित्रं कृत्वा पयः प्रणयति

उक्तऊहः। समानमानिर्वपणात्। धात्रेजुष्टंनिर्वे० अनुमत्यै० राकायै० सिनीवाल्यै०
कुह्वैजुष्टंनि० धातर्हव्यं० स्व० अनुमते० स्व० राकेहे० सिनीवालि० धात्रेवोजुष्टं
प्रोक्षाम्यनुमत्यैराकायैसिनीवाल्यैकुह्वै० प्रक्षालननिनयनांतंकृत्वायथाभागं
व्यावर्तध्वमितिविभज्य० दधातित्रे० इदमनुमत्यैराकायैसिनीवाल्यैकुह्वै चा अ
थयथातुभागंपिनष्टि। अष्टाकपालवद्वादशकलान्युपदधाति। यथाक्रमंच
रुस्थालीःकपालेष्वंगारान्व्यूह्य प्रातर्दोहं दोहयतिनिरूढमिस्यादिसंप
न्यध्वमित्यंतं० मित्रावरुणाभ्यां हविः मित्रावरुणाभ्यां देवेभ्यः। सायंदोहं
लौकिकंवादध्यानीयामिक्षांकरोति। नास्तिवाजिनस्यप्रतिपत्तिःअस्ती
त्येके। स्वंवपनादियथान्याय्यं चरुपुरोडाशधर्माःउक्तं चरुर्वैभागःआ
ग्नेयानिर्नीय। प्रोक्षणीरासादयति [illegible] दि प्रागितरं चसंमार्ष्टिपत्नीसं
नहनादि

ज्यग्रहणकालेसु प्रजास्त्वायेत्यादिं ध्रुवायामेव। प्रोक्षणीरभिमंत्र्य ब्रह्मा
णमामंत्र्य इध्मं प्रोक्ष्य प्रोक्षण्यवशेषं निनीय पवित्रे अपिसृज्याहवनीयं कृत्वो
परिधिभिः परिदधाति। अग्निमभिमंत्र्य ध्रुवां स्रुवमाज्यस्थालीं च सादयि
त्वा अभिमंत्रणमुक्तं उपसद्धृत इदमहमित्यादि प्रियेण ना सीदंतु। यत्त आ
त्मा इयमिंद्रियं यत्तास्थ अयं यज्ञः पंचहोता। वेधंतान्परिस्तीर्य होतारस्सा
मिधेनीभ्यः संप्रेष्यति। सप्तदशास्सामिधेन्यः सर्वे मिध्ममादधाति। ओ
टासु देवतास्वग्निमुपवाज्याग्नीदिति प्रेष्यः। संमृष्टे प्रवरं सीद होतरि
ति व्याख्याते पंचहोतरि आज्यभागाभ्यां प्रचर्या प्रचर्येवा। आमिक्षामव
दाय मित्रावरुणाभ्यामनुब्रूहि मित्रावरुणौ यज मित्रावरुणयोरहं दे

१८६

येंद्रियावीजेमानमितिवा। अत्रवापनं। अथधात्रादीनांयथान्याय्यंप्रचारः
समानंस्विष्टकृदिडांविरुज्यप्राशित्रं॰नास्तियजमानभागःमार्जनांतेमिथुनो
गावोदक्षिणाधर्मः तूलीमिध्मसंनहनानिप्रहरतिशाखापवित्रचतूलीयोक्त्रे
विमोकः। ब्रह्मयजमानौयथेतंप्रतिनिष्क्रामतः। आमिक्षापक्षेकेचिदाज्येन
देविकायजंति। तेषांप्राक्स्विष्टकृतः। ध्रुवाज्यादुपांशुइज्येरन्सर्वेषां द
र्व्यिरसीत्यनुमंत्रणं। स्विष्टकृदादिपूर्ववत्सद्योबर्हिर्निर्वपति। दर्भग्रंथीन्वि
सृज्ययथास्थितंदक्षिणमुदंचंहविर्धानेबर्हिर्वेदिनिरूह्य। यत्कुसीदम
प्रती॰णोभवामि। आहवनीयादंगारमाहृत्यस्तीर्णांवेदिमादीपयति। घ्नं
दस्वंपरहृयं। प्राग्वंशेशालामुखीयालिप्तेवेदितूलीमुपोषति। एतरं

सधस्थप० व्योमन्। जानीतादेनंप० स्सै। संग०व्यवध्वम० सी स्तइतितिसृभि-
र्धूममुद्यंतमनुमंत्रयते। विश्वलो० वीभ्वदा० होवरेण्यं स्वाहा। अंजलिना
सक्तूतुपो वणा सोजुहुयात् नैमित्तिको होमः। यदिपूर्वं पापंकला प्रायश्चि
त्तमप्यकतत्वादिह स्मरन् पातको पवाव्यतिरेकेण तस्येदं प्रायश्चित्तं॰ अयं
नो नभसा पुरः॰ अस्तून् आहवनीयमुपतिष्ठते अदाव्यमितिकेशवः। सत्वं
नो नभस्पसे० कधि॰ देवूस॰ स्फा० स्वस्तिं उपस्थानमात्रं। पृथगपयते।
प्राचीनमुदवसायनिर्मथ्य विहारं सर्वाधयिलाग्निं विहृत्य अजस्त्रत्वेपृथ
क्समरोपणमथने भवतः। उदवसाय्यालिप्या। कालतस्तंत्रं औदवसानी
यं हविः नवतं विद्यु कृष्णी नरतः वाचस्पता दि ब्रह्मणः दक्षिणानडुनहि

रण्यंवानस्ति धर्मोः तूष्णीमुपनिष्क्रम्यब्राह्मणतर्पणं। उरु विष्णो वि॰ तिरस्वा
हा॰ पूर्णामनंति। द्वादशागृहीतेनांतर्वेदी। त्यापस्तंबः। दर्विहोमधर्मेणे। येके
यथाशक्तिदानमध्वर्यवे। ब्रह्मायथेतंप्रतिनि ष्क्रामति। यजमानो वृष्टिर
सीत्यपउपस्पृश्ययथेतंप्रतिनिष्क्रामति। दीक्षणीयायांकृतस्यविमोच
नं॰ केचिदाहुः॰ वृष्टिरसीतिपठंति। तेषामुदवसानीयायामपिभक्तः। तत्रा
प्यर्थसिद्धमुपस्पर्शनं दीक्षणीयायांकृतत्वात्। अग्निहोत्रकालआसन्ने पू
र्णाहुतिः अन्यत्रेष्टिरितिविनिवेशः। सायावन्हूयात्। तदेतदारब्धाग्नी
यस्यैनान्यस्यप्रागम्नारंभात् स्वकालत्व आरब्धेव्यत्वाच्च॰ तस्यांतरे सायं
कालआरंभः अग्निहोत्रद्वयमिदसामाग्निरुकमन्यते। तेषामनारब्धेपिक

त्तेव्यं। अनंतरेकाले दर्शहोमादि धर्मेण यावज्जीवसंकल्पेनारब्धव्यं युक्तं
ग्राह्यं। अपरआहुः सायावग्नात्रइत्सनेनैवव्याख्यायते। सर्वरात्रिः सायमग्नि
होत्रस्यकालः सर्वमहः प्रातरग्निहोत्रस्येति तदेतदापद्विषयत्वमित्याप
स्तंबः तथाछंदोगपरिशिष्टेप्युक्तं नेतन्मध्यप्रतिनैय्यायिकाः मुख्यकाले
कर्मानुष्ठेयं। गौणकालेप्रायश्चित्तंकृत्वानुष्ठेयं अत्यंतापदिअकालेकृ
तमकृतमेव। अतस्तेषामुदवसानीयांतरमकालेपिहोमकालवत्प्राय
श्चित्तमपिनकर्त्तव्यं। एतेनैवन्यायेनखुत्यादिवसंप्राप्तेष्टिरपिकर्त्त
व्यारब्धदर्शपूर्णमासस्तस्यनचप्रायश्चित्तं। नदीक्षाद्यंतभूता। इच्छय
स्तासांतत्रैवनिषेधात् अग्निहोत्रस्यसामांगत्वमेवन्याय्यायचतुसा

यावद्रात्रो क्षेरिति आम्रातरग्निहोत्रादितिच। तदनुष्ठात्वोकार्योयप्रयो
गं संधानंक्रियते यथा प्रातरग्निहोत्रं हुत्वा सायंजुहोत्यग्निहोत्र इति। अतः
सोमाधानममावास्याधानवन्नूसीमेवाग्निधारणार्थं होमंकृत्वानंतरेका
ले आरब्धव्यंकालीहोमः॥ ॥संतिष्ठतेग्निष्टोमः॥ ॥इतिश्रीसत्या
षाढहिरण्यकेशिसूत्रप्रयोगसिद्धौमातदत्तीयायां मंत्रमालायांसो
मप्रयोगः समाप्तः॥ ॥त्रिविधः रथंतरसाम बृहत्सामोभयसामेति॥
पंचविधिरितिजैमिनिः॥ ॥ ॥छं॥ ॥श्रीरस्तु॥
सदाशिवार्पणमस्तु

